५४. त आकाशे न विद्यन्ते ।। ५ ।।

एते चत्वारोपि गुणाः आकाशे पञ्चमे भूते न सन्ति । एभिः पञ्चभिः सूत्रैः पञ्चानां भूतानां मिथः साधर्म्यवैधर्म्ये उक्ते भवतः । उक्तगुणचतुष्टयशून्यत्वं आकाशस्य पृथिव्यादिभ्यश्चतुर्भ्यो वैधर्म्यम् । स्पर्शवत्त्वं चतुर्णां मिथः साधर्म्यम् । रूपवत्त्वं त्रयाणां मिथः साधर्म्यम् । वायोर्वैधर्म्यं च । रसवत्त्वं द्वयोः मिथः साधर्म्यम् । तेजोवायुभ्यां वैधर्म्यं च । गन्धः पृथिव्या वैधर्म्यमिति ।

५५. सर्पिर्जतुमधूच्छिष्टानां पार्थिवानामग्निसंयोगाद् द्रवत्वमद्भिः सामान्यम् ।। ६ ।।

"आपो द्रवाः स्निग्धाश्च" इति द्रवत्वं स्नेहश्च अपां इतरेभ्यो वैधर्म्यम् । पृथिव्या गन्धवदिति ज्ञापितम् । तत्र द्रवत्वे कश्चन विशेषं अनेन अनन्तरेण च सूत्रेणाह ।

सर्पिः घृतम् । जतु लाक्षा । मधूच्छिष्टं मध्वपूपः । इमानि द्रव्याणि पृथिवीत्वजातिमन्ति, पृथिवीविकारभूतानि । एष्वपि द्रवत्वमस्ति । परं तु तत् जल इव न सांसिद्धिकम् न नैसर्गिकमित्यर्थः । अपि तु अग्निसंयोगरूपनिमित्तात् जायमानं नैमित्तिकम् । एतेन द्रवत्वं द्विविधं, सांसिद्धिकं नैमित्तिकमिति । एवं विशेषसत्त्वेऽपि सामान्यतो द्रवत्वं सर्पिरादिरूपायाः पृथिव्याः अद्भिः सामान्यम्, सांसिद्धिकद्रवत्वं तु अपां इतरेभ्यो वैधर्म्यं पूर्वमभिप्रेतमिति ज्ञापितं भवति ।

५६. त्रपुसीसलोहरजतसुवर्णानां तैजसानामग्निसंयोगाद् द्रवत्वमद्भिः सामान्यम् ।। ७ ।।

त्रपुप्रभृतयो लोहविशेषाः प्रसिद्धाः । अत्र लोह इति अयोरूपो लोहविशेषो विवक्षितः । ताम्रमपि । एतानि द्रव्याणि तैजसानि । एष्वपि अग्निसंपर्कनिमित्तकं द्रवत्वमस्ति । अतः पूर्ववत् सामान्यतो गृहीतं द्रवत्वं एषां तेजोद्रव्याणां सर्पिःप्रभृतिभिः पार्थिवद्रव्यैः साधर्म्यम् । सांसिद्धिकद्रवत्वमेव तु अपां इतरेभ्यो वैधर्म्यमिति ।

भूतानां साधर्म्यवैधर्म्यप्रकरणं समाप्तम् । आद्यानि त्रीणि भूतानि प्रत्यक्षाणि । रूपवत्त्वात् । वाय्वाकाशौ अप्रत्यक्षौ, रूपरहितत्वात् । अत इमौ अनुमानगम्यौ । प्रत्यक्षमिव अनुमानमपि हि वस्तुसिद्धौ प्रमाणम् । तत्र वायौ अनुमानं प्रदर्शयिष्यन् तत्र वक्ष्यमाणविशेषसुग्रहत्वाय प्रथमं ततो विलक्षणं किञ्चिदनुमानं दर्शयति ।

**५७. विषाणी ककुद्मान् प्रान्तेवालधिः सास्नावानिति गोत्वे दृष्टं लिङ्गम् ॥ ८ ॥**

विषाणी शृङ्गवान् । ककुत् वृषभाणां गलपृष्ठसन्धौ उद्गतो भागः । तद्वान् ककुद्मान् । प्रान्ते वालधिः प्रकृष्टोऽन्तः प्रान्तः शरीरस्य अधोभागः यो भूमिं स्पृशतीव । तत्र तदवधि प्रलम्बः वालधिः पुच्छं यस्य सः प्रलम्बतमवालः इत्यर्थः । नहि गोरिव अन्येषां पशूनां तथा प्रलम्बो बालः । सास्ना बालकम्बलः । तद्वान्, इति एतैः शब्दैः गम्यं यत् तत् । गोत्वे विशेषसामान्ये साध्ये । इदमुपलक्षणं अश्वखरादिभेदस्य । दृष्टं साध्येन सह पक्षे विद्यमानतया प्रत्यक्षविषयीकृतम् । लिङ्गं हेतुः ।

गां अश्वं च असकृद् दृष्टवान् पुरुषः विषाणित्वप्रभृतीनां गोत्वेन अश्वभेदेन च व्याप्तिं गृह्णाति । ततः अल्पप्रकाशे क्वचित् स्थले मृगं कश्चन पश्यन् सन्दिग्धे गौर्वा अयं, अन्यो वेति । ततः सावधानं पश्यन् विषाणे दृष्टे नायमश्वः विषाणित्वादित्यवधारयति । ककुद्दर्शने अयं गौः नाश्वः ककुद्मत्त्वात् इति निश्चिनोति । एवं प्रान्तेवालधित्वसास्नावत्त्वदर्शनेऽपि, इति द्रष्टव्यम् । इत्थं विषाणित्वादीनि अश्वादिभेदे गोत्वे च लिङ्गानि भवन्ति । प्रत्यक्षेण गवि व्याप्तिग्रहणाच्च दृष्टलिङ्गानि भवन्ति ।

**५८. स्पर्शश्च वायोः ॥ ९ ॥**

लिङ्गमित्यनुवर्तते । स्पर्शश्च लिङ्गम् । यथा विषाणित्वादिकं तथा स्पर्शोऽपि लिङ्गम् अनुमितिहेतुः । तत् सर्वं गोत्वस्य लिङ्गम् । स्पर्शः कस्य । वायोः चतुर्थस्य भूतस्य पृथिव्यादिवदप्रत्यक्षस्य । रथ्यायां स्पर्श उपलभ्यते । तेनानुमीयते अत्र केनचिद् द्रव्येण भवितव्यम् । स्पर्शो हि गुणः । न चायं गुणः द्रव्यं विना वर्तत इति । तदाश्रयो

यद् द्रव्यं स एव वायुः। एवं स्पर्शः वायोर्लिङ्गम्। अत्र पूर्वं "गोत्वे" इतिवत् "वायौ" इति युक्तं वक्तुम्। तथापि षष्ठीसप्तम्योरविशेष इति ज्ञापनायेह षष्ठीति ज्ञेयम्। ननु आश्रयभूतद्रव्यविरहे गुणोपलम्भानुपपत्तेः तादृशं द्रव्यं किञ्चन सिध्यतु। स वायुरेवेति कथमित्यत्राह—

५९. न च दृष्टानां स्पर्श इत्यदृष्टलिङ्गो वायुः ॥ १० ॥

नहि स स्पर्शः पृथिव्याः अपां तेजसो वा। इमानि हि भूतानि प्रत्यक्षाणि। यद्येषां अन्यतमं तद् द्रव्यं तर्हि प्रत्यक्षं दृश्येत। न च दृश्यते। न च स आकाशः। तस्य स्पर्शशून्यत्वात्। पृथिव्यादीनां तु स्पर्शाश्रयत्वं संभवति। तथापि तत्र स्थितिर्न सम्भवति। अदर्शनात्। स्थितौ हि दर्शनं अवश्यमभविष्यत्। रूपिद्रव्यत्वात्। अतो भूतान्तरेभ्यो व्यतिरेके सिद्धे स वायुरिति निश्चीयते। परं अस्य स्पर्शरूपस्य वायुलिङ्गस्य गोत्वलिङ्गेभ्यः विषाणित्वादिभ्यः अस्ति कश्चन विशेषः। गोत्वेन व्याप्तिमत्तया प्रत्यक्षं गोषु दृष्टानि विषाणित्वादीनि लिङ्गानि। तस्माद् दृष्टलिङ्गं गोत्वम्। स्पर्शस्तु वायुना सह तथा न दृष्टः। वायोः नीरूपस्याप्रत्यक्षत्वात्। तथापि स्पर्शो गुणः। अतः स आश्रयं द्रव्यविशेषं विना न भविष्यतीति तत्र भवितव्यं केनचिद् द्रव्येण। तद् द्रव्यं न पृथिवी, नापः, न तेजः। अनुपलब्धेः। अतः परिशेषाद् वायुरिति स्पर्शो वायोर्लिङ्गं भवत्येव। परं तु अदृष्टं लिङ्गम्। न तु विषाणित्वादिवत् दृष्टं, इति विशेषः। अत्र वायोरदृष्टं लिङ्गमिति वक्तुमौचित्ये सत्यपि अदृष्टलिङ्गो वायुरित्युक्तिः साध्यत्वेन तस्य प्राधान्यात्। उत्तरत्रानुषङ्गसौकर्याच्चेति बोध्यम्।

६०. अद्रव्यवत्त्वेन द्रव्यम् ॥ ११ ॥

न विद्यते द्रव्यं आरम्भकावयवत्वेन येषां ते अद्रव्याः चरमावयवाः परमाणवः। ते अस्य सन्ति आरम्भकावयत्ववेन, समवायिकारणत्वेन, इति अद्रव्यवान्। तस्य भावः तेन। वायुरिति अनुवर्तते। अवयवकार्यभूतावयवित्वेन वायोः स्पर्शलिङ्गेनानुमीयमानस्य द्रव्यत्वं सिध्यति। न हि द्रव्येतरपदार्थस्य अवयवित्वं संभवतीति। यद्यपि स्पर्शरूपगुणवत्त्वेनैव द्रव्यत्वं सिद्धं, तथापि कण्ठोक्त्या तत्साधनव्याजेन तस्य अवयवित्वं अत एवानित्यत्वं चात्र प्रतिपिपादयिषतीति ज्ञेयम्।

६१. क्रियावत्त्वाद् गुणवत्त्वाच्च ॥ १२ ॥

वानरूपक्रियावत्त्वात् संयोगविभागपरत्वापरत्वादिबहुगुणान्तरवत्त्वाच्च वायुर्द्रव्यम् । अत्रापि स्पर्शेतरबहुधर्मवत्त्वप्रतिपादने तात्पर्यम् । गुणवत्त्वस्य प्रथमाभिधाने युक्तेऽपि गुणशब्देन क्रियाजन्यसंयोगादिकं विवक्षितमिति ज्ञापनाय क्रियावत्त्वस्य प्रथमाभिधानम् ।

६२. अद्रव्यत्वेन नित्यत्वमुक्तम् ॥ १३ ॥

प्रपूर्वसूत्रे परमाणुवाचकतया अद्रव्यशब्दः प्रयुक्तः । तस्य समवायिकारणरहितं द्रव्यमित्यर्थः । कारणराहित्ये च कार्यत्वाभावात् नित्यत्वं वायुपरमाणूनामुक्तं भवतीत्यर्थः । वायुर्द्विविधः नित्योऽनित्यश्चेति । नित्यः परमाणुरूपः अनित्यः कार्यरूप इति वायुविभागोऽत्राभिप्रेतः ।

६३. वायोर्वायुसम्मूर्छनं नानात्वलिङ्गम् ॥ १४ ॥

ननु स्पर्शलिङ्गेन तस्याश्रयः कश्चिदस्तीति, स द्रव्यमिति काममनुमानेन सिद्ध्यतु । सोऽवयवीति, स परमाणुभिरारब्ध इति कथं सिद्ध्यति । स एको निरवयव इति किं न स्यात्, इत्यत्र आह ।

वायोः वायुकर्मकं, वायुसम्मूर्छनं वायुकर्तृकोऽभिघातः वायुकर्तृकः वायुकर्मकोऽभिघातो वा वायोः नानात्वे मिथो भेदे, अनेकत्वे लिङ्गं ज्ञापकम् । प्राच्यां दिशि एको वायुः प्रतीच्यामपरः । उभावपि वेगेन वान्तौ हि परस्परमभिहत इति तृणपांसुपर्णादीनामुत्पतनेन असंदिग्धं जानीमः । तेनानेकत्वं निश्चीयते । तत्र एकैकोऽपि एकोऽवयवी । अवयवी चावयवारब्ध इति युक्तः पूर्वकृतो निर्णयः ।

ननु स्पर्शलिङ्गेन तदाश्रयः सिद्ध्यतु । स पृथिव्यादिव्यतिरिक्त इत्यपि काममस्तु । वायुरिति तस्य विशेषतोऽभिधानं तु कथमित्याक्षिपति—

६४. वायुसन्निकर्षे प्रत्यक्षाभावात् दृष्टं लिङ्गं न विद्यते ॥ १५ ॥

स्पर्शलिङ्गं विषाणित्वादिलिङ्गवत् न दृष्टं लिङ्गमिति भवतैवोक्तम् । कस्मात् तत् । वायौ वाति सति त्वगिन्द्रियं तेन सन्निकृष्यते । एवं विषयेन्द्रियसन्नि-

कर्षे प्रत्यक्षज्ञानोत्पत्तिकारणे सत्यपि वायोः प्रत्यक्षं न जायते। रूपाभावात्। एवं वायोरदृष्टलिङ्गत्ववादिना भवता तस्याप्रत्यक्षत्वमभ्युपगतम्। अप्रत्यक्षस्य तस्य "अयं वायु"रिति संज्ञाकरणायोगात् वायुरिति विशेषाभिधानं अप्रामाणिकम्। गौः प्रत्यक्षः। तं दृष्टवान् कश्चित् "अयं गौरिति व्यवहर्तव्यः" इति सङ्केतमकरोदिति युज्यते। न तु अप्रत्यक्षे पदार्थे। अभिधेये वस्तुनि अदृष्टे अभिधानाकांक्षाविरहात्।

नन्वनुमानावगतस्यार्थस्य अभिधानाकाङ्क्षा किं न घटत इत्यत्राह—

**६५. सामान्यतोदृष्टाच्चाविशेषः ॥ १६ ॥**

अनुमापकं लिङ्गं द्विविधं—विशेषतो दृष्टं सामान्यतो दृष्टं चेति। पक्षे तत्सजातीये वा धर्मिणि साध्यसाधनयोः प्रत्यक्षेण व्याप्तिग्रहणे सति तत् साधनं विशेषतो दृष्टम्। यथा विषाणित्वादि। यत्र न तथा तत्रत्यं साधनं सामान्यतो दृष्टम्। यथा सूर्ये गत्यनुमाने पूर्वमन्यत्र दृष्टस्य पश्चादन्यत्र दर्शनम्। प्रकृतं स्पर्शरूपं वायुलिङ्गं च सामान्यतो दृष्टमेव। यत्र स्पर्शः तत्र वायुरिति विशिष्य व्याप्तिग्रहणाभावात्। तेन अनेन लिङ्गेन जायमानायां बुद्धौ कश्चिदाश्रयोऽस्तीति सामान्यमेव विषयः। न तु वायुत्वरूपो विशेषः। अगृहीते चास्मिन् विशेषे तदभिधायितया पदविशेषकल्पनमशक्यम्। सामान्यमेव गृह्यते। न तु विशेष इति सूत्रार्थः। ततो जायमानः प्रत्ययः अविशेषः विषयतया वायुत्वरूपविशेषरहित एवेति वा। तस्मिन् विशेषाभाव इति वा।

तर्हि वायुरिति अनादिः सार्वत्रिको व्यवहारः कथम्। तत्र हि उपपत्तिर्वक्तव्या, इत्यत्र स्वमतमाह आक्षेप्ता—

**६६. तस्मादागमिकम् ॥१७॥**

आगमे वेदे भवं आगमिकम्। लिङ्गमिति व्यवधानेऽप्यनुवर्तते। लिङ्गं ज्ञापकम्। यस्मात् विशिष्य वायुत्वेन वाय्ववगतौ वा तदभिधायित्वेन वायुपदसिद्धौ वा प्रत्यक्षं वा अनुमानं वा न निदानं भवितुमर्हति, तस्मात् आगमे तत्प्रतिपादकं वाक्यमेव तन्मूलमित्यर्थः। यद्वा वायुत्वावच्छिन्नं द्रव्यमस्तीति तदभिधायि वायुपदमिति च आगमादेवावगतमित्यर्थः॥

अत्र अनभिमतिं व्यञ्जयन् शास्त्रकारः स्वमतमाह—

**६७. संज्ञाकर्म त्वस्मद्विशिष्टानां लिङ्गम् ॥१८॥**

आगमोऽपि प्राक्सिद्धाभिधेयाभिधाननिबन्ध एव। अतस्तत्रापि मूलं वक्तव्यम्। तदुच्यते। वेदस्तावत् प्रमाणम्। शिष्टैस्तथा परिगृहीतत्वात्। तद्विहितानां कर्मणां स.फल्यदर्शनाच्च। दोषमूलत्वानुपलम्भाच्च। तत्र वायुत्वावच्छिन्नवाचितया, तत्संज्ञात्वेन, वायुशब्दप्रयोगो दृश्यते। तल्लिङ्गं, अस्मदपेक्षया अतिशयितशक्तिमन्तः पुरुषा आसन्, ये अस्मदिन्द्रियागोचरानपि अर्थान् साक्षात्कृत्य संज्ञां चक्रुरित्यत्र।

संज्ञाकर्म अतीन्द्रियाणामपि अर्थानां संज्ञाकरणं पूर्ववृत्तं, अस्मदिति पञ्चमी अस्मदपेक्षया विशिष्टानां विलक्षणशक्तिमतां, तथाविधाः पुरुषा आसन्नित्यस्मिन् विषये लिङ्गमिति सूत्रस्याक्षरार्थः। ते वायोः वायुरिति संज्ञां चक्रुः। अतो न काचिदनुपपत्तिरिति भावः। तुकारः पूर्वमतानङ्गीकारसूचकः॥

**६८, प्रत्यक्षप्रवृत्तत्वात् संज्ञाकर्मणः ॥१९॥**

प्रत्यक्षेण न त्वनुमानेन भ्रमेण वा प्रवृत्तत्वात् निष्पन्नत्वात् संज्ञाकर्मणः सर्वेषां वस्तूनां नामकल्पनस्य। वाय्वाद्यतीन्द्रियवस्तुवाचकसंज्ञाकल्पनं अस्मदपेक्षया विशिष्टा आसन्नित्यत्र लिङ्गं भवतीति पूर्वेणान्वयः॥

अवसितं वायुप्रकरणम्। अथ आकाशप्रकरणम् तत्र अप्रत्यक्षस्य आकाशस्य सिद्धौ साधनं परेषामभिमतं दर्शयति—

**६९. निष्क्रमणं प्रवेशनमित्याकाशस्य लिङ्गम् ॥२०॥**

गृहान्निष्क्रामति, गृहं प्रविशति, इति निष्क्रमणं प्रवेशनं च प्रसिद्धम्। तत्र यत्र भित्तिरस्ति तत्र तन्न सम्भवति। अतः पृथिव्यादिभ्यः मूर्तद्रव्यादिभ्यः अतिरिक्तं किञ्चिद् द्रव्यं तत्कारणमस्तीत्यभ्युपगन्तव्यम्। तद् द्रव्यमाकाश इति निष्क्रमणं प्रवेशनं च आकाशस्य लिङ्गमिति।

इदं निराकरोति—

**७०. तदलिङ्गमेकद्रव्यत्वात् कर्मणः ॥२१॥**

तत् उक्तं निष्क्रमणं प्रवेशनं च अलिङ्गं दुष्टं लिङ्गम् । आकाशसाधनाक्षम-मित्यर्थः । कुतः । कर्मणः एकद्रव्यत्वात् । एकमेव द्रव्यं समवायिकारणतया आश्रय-भूतं यस्य तत्त्वात् । कर्म निष्क्रमणादिरूपं एकस्मिन्नेव द्रव्ये समवैति । न संयोगादिवत् द्रव्यद्वये । तत्र यः पुरुषः निष्क्रामति प्रविशति च तस्मिन् तत्कर्म वर्तत इति सर्वसम्मतं, दुरपह्नवम् । तथा सति तदाश्रयतया द्रव्यान्तरापेक्षा नैवास्ति । कथं द्रव्यान्तरं सिद्ध्येत् ।

ननु आश्रयतया द्रव्यान्तरापेक्षा नास्तीति सत्यमेतत् । तथाऽपि निमित्तकारण-तया तदपेक्षाऽस्त्येव । पृथिव्यादीनि द्रव्याणि अवकाशं न ददति । तेन निष्क्रमणा-दिकं न जायते । अतः अवकाशदानक्षमं द्रव्यान्तरमपेक्ष्यते । तदाकाशमिति भवत्येव निष्क्रमणादिकमाकाशस्य लिङ्गमित्यत्राह—

**७१. कारणानुक्लृप्तिवैधर्म्याच्च ॥२२॥**

कारणस्य अनुक्लृप्तिः अवधारणम् तस्य वैधर्म्यात् विरुद्धधर्मवत्त्वात् । इदं कारणमित्यवधारणे अनुकूलः नियामकः धर्मः अन्वयव्यतिरेकवत्त्वम् । अस्मिन् सति कार्यं भवति । असति न भवतीति । निष्क्रमणादिकं प्रति आकाशस्य तन्नास्ति । आका-शस्य अवर्जनीयतया सन्निधिः । न तु कार्यनिष्पत्तये अपेक्षितत्वात् । अतोऽन्वयो-नास्ति । आकाशस्य विभुत्वेन नित्यत्वाच्च क्वचिदपि कदाचिदपि तदभावो नास्तीति व्यतिरेकोऽपि नास्ति । एवं कारणत्वावधारणोपयुक्तं यत् अन्वयव्यतिरेकवत्त्वं तद्वि-रुद्धस्य तदभाववत्त्वस्यैव आकाशे विद्यमानत्वात् निष्क्रमणादेः निमित्तकारणमपि न भवितुमर्हतीति न तदपेक्षावशेनापि तदाकाशं साधयितुमलमित्यर्थः ॥

ननु द्वारदेशे तदवच्छिन्नाकाशोऽस्ति । तस्मिन् सति निष्क्रमणादि भवति । कुड्यादौ तदभावे न भवतीति एवान्वयतिरेकौ, इति चेत् अत्राह—

**७२. संयोगादभावः कर्मणः ॥२३॥**

कुड्यमभिगच्छन् पुरुषः तेन संयोगं प्राप्नोति । ततः परं गन्तुं न शक्नोति । तेन निष्क्रमणाभावः । एवं च मूर्तद्रव्यसंयोगः निष्क्रमणप्रतिबन्धकः । तदभावात् द्वारदेशे निष्क्रमणं भवतीत्येवमुपपत्तौ नाकाशकल्पनमावश्यकम् ॥

एवं परोक्तं लिङ्गं निरस्य स्वयं शब्दं तल्लिङ्गं वदन् प्रथमं तस्य वायुपर्यन्तद्रव्यचतुष्टयगुणत्वाभावे एकं हेतुमाह—

**७३. कारणगुणपूर्वकः कार्यगुणो दृष्टः ॥२४॥**

कारणस्य यो गुणः सः पूर्वः नियतपूर्ववर्ती, कारणमिति यावत्, यस्य सः कारणगुणपूर्वकः। कारणगुणकारणक इत्यर्थः। कार्यस्य गुणः कार्यगुणः। एकैकेन्द्रियग्राह्याः भोगार्हा विशेषगुणाः रूपरसगन्धस्पर्शा विवक्षिताः। पृथिव्यादिकार्यद्रव्यवर्तिनः इमे गुणाः कारणभूतावयवस्थगुणकारणका एव। न तदतिरिक्तं कारणमपेक्षन्ते। पाकजा गुणाः यद्यपि पाकमपेक्षन्ते तथाऽपि पृथिव्या यत्किञ्चिद्रूपवत्त्वं स्वाभाविकम्। पाकः रूपविशेषे हेतुः। न तु सामान्यतो रूपवत्त्वे। रूपरहितपार्थिवद्रव्यस्यानुपलब्धेः। अथवा पीलुपाकवादिनां अवयवगुणानामेव अग्निसंयोगापेक्षा। न त्ववयविगुणानाम्। अत इमे कारणान्तरनिरपेक्षा एव। कारणगुणमात्रपूर्वकाः। दृष्ट इति। न चात्र काचन विप्रतिपत्तिरस्तीति भावः। न च शब्द ईदृशः। द्रव्यान्तरसंयोगादिरूपकारणान्तरापेक्षत्वात्। कोणेन ताडने सति हि भेरी ध्वनति। विदलने च वेणुः। अतः शब्दः न स्पर्शवतां आद्यानां चतुर्णां भूतानां गुणः। अयं प्रयोगः। शब्दः स्पर्शवतां न गुणः, कारणगुणेतरकारणकत्वात्। यन्नैवं तन्नैवम्। यथा रूपरसगन्धस्पर्शाः। इति॥

हेत्वन्तरं प्रतिज्ञया सह प्रदर्शयति—

**७४. कार्यान्तराप्रादुर्भावाच्च शब्दः स्पर्शवतामगुणः ॥२५॥**

अन्यत् कार्यं कार्यान्तरम्। तस्य अप्रादुर्भावात् अनुत्पत्तेश्च। कार्येषु यो गुणः सः अवयवगुणस्य कार्यः। अस्मात् अवयवगुणकार्यात् अवयविगुणात् कार्यान्तरं न प्रादुर्भवति। न ह्यवयविगुणः स्वाश्रये वा अन्यत्र वा स्वसजातीयं गुणान्तरं जनयति। जनयति तु शब्दः। भेरीतः कर्णपर्यन्तं वर्तमानायां शब्दपरम्परायां पूर्वपूर्वस्य शब्दस्य उत्तरोत्तरशब्दजनकत्वात्। अतः स्पर्शवद्गुणवैधर्म्यात् शब्दः न स्पर्शवतां गुणः। प्रयोगश्च। शब्दः न स्पर्शवतां गुणः, सजातीयकार्यान्तरजनकत्वात्। यन्नैवं तन्नैवम्। यथा रूपादय इति। चकारः पूर्वहेतुं समुच्चिन्वन् तत्रापि इयमेव प्रतिज्ञेति ज्ञापयति।

भेरीताडने तत्र, समुद्रघोषे सति जले, दवानलदह्यमानवेणुस्फोटे अग्नौ, वेणुवादने वायौ च शब्दप्रतीतेः तेषामन्यतमस्य गुणो भवितुमर्हति शब्द इति मतिः सहजेन जायेत। सा सूत्रद्वयेन निवर्तिता। कालस्य दिशो वा गुणः स्यादिति शङ्कायाः नास्त्यवसरः। इदानीं शब्दः इति प्रतीतिस्तावत् इदानीं घटः अत्र घटः, इदानीं रूपं अत्र रूपं इत्यादिसर्वपदार्थान्तरविषयप्रतीत्यविशिष्टत्वात् कालिकदैशिकसम्बन्धेन शब्दवत्तां गोचरयति। न तु समवायेन। न च समवायेन तयोस्तद्वत्त्वशङ्काजनकं हेत्वन्तरं किमप्यस्ति। अतः तद्गुणत्वनिषेधोऽनपेक्षित इति मत्वा चरमद्रव्यद्वयगुणत्वं निषेधति।

**७५. परत्र समवायात् प्रत्यक्षत्वाच्च नात्मगुणो न मनोगुणः ।।२५।।**

परत्र आत्मा यत्र अहमिति प्रतीयते शरीरप्रदेशेऽन्तः ततोऽन्यत्र। बहिर्देश इत्यर्थः। तत्र समवायात् विद्यमानत्वात्। "अयं शब्दः" "अत्र शब्दः" इति बहिर्देशसम्बन्धितयैव हि स प्रतीयते। अतः स तत्रैव वर्तते। न त्वात्मनि। अहं शब्दी मयि शब्द इति प्रतीतिविरहात्। अतो नात्मगुणः। मनोगुणोऽपि स न भवति। प्रत्यक्षत्वात्। मनो ह्यणु। तद्वृत्तिश्चेत् शब्दः कथं प्रत्यक्षः स्यात्। प्रत्यक्षश्च सः। नहि परमाणुवृत्ति रूपादिकं प्रत्यक्षम्।

यद्यपि शब्दः आत्मनो मनसो वा गुण इति शङ्कायां नैव कश्चन हेतुरस्ति तथाऽपि वक्ष्यमाणपरिशेषसिद्धचै च यदि कश्चित् वैयात्यादेव तथा ब्रूयात् तन्निरसनोपयुक्तप्रबलहेतुकथनाय च इदमुक्तमिति ज्ञेयम्। यद्यप्यनेन न्यायेन दिक्कालगुणत्वनिषेधोऽपि कण्ठोक्त्या कर्तुं युक्तः तथाऽपि चरमनिर्दिष्टद्रव्यद्वयगुणत्वनिषेधे कृते ततः प्राङ्निर्दिष्टद्रव्यगुणत्वनिषेधोऽपि स्वाभिमत इति, तत्र हेतोः सुगमत्वधिया स्वेन कण्ठोक्तिर्न कृतेति च श्रोतारो भोत्स्यन्त इति महर्षिर्मन्यत इति मन्यामहे।

**७६. परिशेषाल्लिङ्गमाकाशस्य ।।२७।।**

शब्द इत्यनुषङ्गाल्लभ्यते। शब्दः आकाशस्य लिङ्गम्। ज्ञापकम्। कथम्। परिशेषात्। अन्येषां अष्टानां द्रव्याणां तेन तेन हेतुना वर्जनानन्तरं कल्पनीयस्य अस्य एकस्यैव तदाश्रयत्वार्हतया शिष्यमाणत्वात्। शब्दः पृथिव्यादिद्रव्याष्टकव्यतिरिक्त-

किञ्चिद्द्रव्याश्रितः, तदनाश्रितत्वे सति गुणत्वात् । यो यदनाश्रितो गुणः सः तदतिरिक्त-किञ्चिद्द्रव्याश्रितः यथा जलाद्यनाश्रितो गुणो गन्धः पृथिव्याश्रितः । यत् तत् अतिरिक्तं द्रव्यं स आकाश इति ।

अत्र "वायुसन्निकर्षे प्रत्यक्षाभावात् दृष्टं लिङ्गं न विद्यते" इत्यादि सूत्र-पञ्चकं वायुपदस्थाने आकाशपदं प्रक्षिप्यानुसन्धेयम् । प्रपूर्वसूत्रे "शब्दः स्पर्शवतामगुणः" इत्युक्तम् । "नात्मगुणो न मनोगुणः" इत्यनन्तर सूत्र इव न स्पर्शवद्गुणः इत्येव वक्तुं युक्तम् । तथापि "स्पर्शवद्गुणभिन्नः आत्मगुणभिन्नश्च शब्दः परिशेषाल्लिङ्गमाकाशस्य" इति सूत्रत्रयमेकवाक्यतया योजनीयमिति ज्ञापयन् महर्षिः अनेनैव प्रकारेण आकाशसाधनं सुशकमिति तत्र स्वनिर्भरत्वं प्रकाशयति ।

**७७. तस्य द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥२८॥**

तस्य आकाशस्य द्रव्यत्वं नित्यत्वं च वायुना वायोः द्रव्यत्वनित्यत्वसाधको यो हेतुरुक्तः तेनेत्यर्थः । व्याख्याते निरूपिते भवत इत्यर्थः । शब्दस्य संयोगादीनां गुणान्तराणां च आश्रयत्वं सिद्धयति । वायुपरमाणुवत् अद्रव्यत्वेन नित्यत्वं सिद्धयति । नहि आकाशस्य आरम्भकं समवायिकारणभूतं द्रव्यमस्ति । मानाभावात् । अतः सः अद्रव्यः । अतः कार्यत्वाभावात् नित्यत्वम् ।

**७८. तत्त्वं भावेन ॥२९॥**

तस्य भावः तत्त्वम् । एवं अभेदस्य एकत्वस्य च प्राचां व्यवहारः । प्रकृते एकत्वं विवक्षितम् । आकाशः एकः कथम् । तद् भावेन सत्तासामान्येन व्याख्यातम् । यया युक्त्या सत्ताया एकत्वं साधितं तयैव युक्त्या आकाशस्य एकत्वं सिद्धयतीत्यर्थः । तां युक्तिं प्रकृतानुगुण्येन ऊहित्वा स्वयमेव दर्शयति ।

**७९. शब्दलिङ्गाविशेषात् विशेषलिङ्गाभावाच्च ॥३०॥**

शब्दः सर्वत्र उपलभ्यते । अतस्तदाश्रयेण आकाशेनापि सर्वत्र वर्तितव्यम् । न च उत्तरस्यां दिशि अन्य आकाशः दक्षिणस्यामन्य इति नानात्वग्राहकं विशेषलिङ्ग-मस्ति । तस्मात् सत्तावत् आकाश एक एव । इदं सूत्रं कैश्चिन्न पठ्यत इत्याहुः ।

**८०. तदनुविधानादेकपृथक्त्वं चेति ।।३१।।**

तस्य एकत्वस्य अनुविधानात् अनुवर्तनात् आकाशस्य एकपृथकत्क्वं च गुणोऽस्तीति ज्ञेयमिति भावः । यत्र एकत्वं तत्र एकपृथक्त्वमपि, इति एकत्वानुविधानं एकपृथक्त्वस्य । एकवस्तुनिष्ठं पृथक्त्वम् । इमौ घटौ इतरेभ्यः पृथगित्यत्र घटद्वयनिष्ठं द्विपृथक्त्वम्, एवं त्रिपृथक्त्वादि ज्ञेयम् । इतिशब्दपाठः प्रामाणिकश्चेत् प्रकरणस्य अह्निकस्य च अवसानसूचनार्थः ।

इति

कणादसूत्रवृत्तौ सुगमायां
द्वितीयाध्याये प्रथममाह्निकम् ।

## द्वितीयमाह्निकम्

**८१. पुष्पवस्त्रयोः सति सन्निकर्षे गुणान्तरा प्रादुर्भावो वस्त्रे गन्धाभावलिङ्गम् ।।१।।**

यदा कश्चित् पुष्पं मालारूपेण ग्रथितं मुक्तकं वा वस्त्रेण परिगृह्य आनयति तदा तस्मिन् वस्त्रे तस्य पुष्पस्य यो गुणः गन्धः स प्रादुर्भवति तत्स्थतया घ्राण-विषयो भवति । गुणान्तरं ततोऽन्यो गुणः पुष्पगन्धादतिरिक्तो गन्धः न प्रादुर्भवति । अयं गुणान्तरप्रादुर्भावः वस्त्रे पुष्पगन्धाभावस्य लिङ्गं ज्ञापकम् । पुष्पसम्पर्कात् प्राक् तत्र सः गन्धो नासीत् । तदनन्तरमुपलभ्यते । अतः अन्वयव्यतिरेकाभ्यां स गन्धः पुष्पस्यैव न वस्त्रस्येत्यवधार्यते । द्रव्येषु गुणव्यवस्थायां अयं न्यायोऽनुसर्तव्य इति भावः ।

उक्तन्यायसिद्धां व्यवस्थामाह—

**८२ व्यवस्थितः पृथिव्यां गन्धः ।।२।।**

सुरभि जलं, सुरभिर्वायुः इति जले वायौ च प्रतीयमानो गन्धः पृथिवीसम्पर्का-धीनः । न तयोः स्वाभाविकः । तत्सम्पर्काभावे तदनुपलब्धेः, संपर्के सति तस्यैवोप-लब्धेश्च । अतः पृथिव्यां गन्धो व्यवस्थितः । तदितरावृत्तित्वे सति तद्वृत्तित्वं व्यवस्थितत्वम् ।

८३. एतेनोष्णता व्याख्याता ॥३॥

एतेन अयं गुणः अस्यैव द्रव्यस्य इति व्यवस्थायां यो न्यायः प्रपूर्वसूत्रे उक्तः तेन उष्णता उष्णस्पर्शः व्याख्याता पृथिव्या गुणो नेति ज्ञापिता। उष्णमन्नं, उष्णा भूमिरिति प्रतीतौ सत्यामपि अस्या उष्णतायाः तेजस्संसर्गान्वयव्यतिरेकाभ्यां तेजःसम्बन्धित्वावधारणात् न पार्थिवीयमिति निश्चीयते।

इदमाह—

८४. तेजस्युष्णता ॥४॥

व्यवस्थितेति विपरिणामेनानुषङ्गः। उष्णं जलं उष्णो वायुरित्यपि तेजःसन्निकर्षप्रयुक्त एव व्यवहार इति भावः।

८५. अप्सु शीतता ॥५॥

व्यवस्थितेति पूर्ववत्। शीतं स्थलं, शीतो वायुरिति प्रतीतिव्यवहारयोः अप्संसर्ग एव निमित्तमिति। ननु प्रथमं शीतता वक्तव्या। पश्चादुष्णतेति चेत् सत्यम्। किन्तु उष्णताशीततयोः तेजोजलयोर्व्यवस्थाकथनात् पृथिवीवाय्वोः अनुष्णाशीततेति ज्ञापितम्। अस्य तृतीयस्य स्पर्शस्य सर्वत्र अनुष्णाशीत इत्येव व्यवहारः। न तु क्वचिदपि अशीतानुष्ण इति। अतोऽत्र प्रतियोगितया निविष्टस्पर्शद्वयक्रमं बुद्धौ कृत्वा उष्णतायाः प्रथमाभिधानमिति ज्ञेयम्।

वायौ व्यवस्थितो गुणो नास्ति। अतस्तदनुक्तिः। शब्दलिङ्गेनैव आकाशस्य साधनात् सः तस्य व्यवस्थितो गुण इत्यनुक्तिसिद्धम्।

८६. अपरं परं युगपदयुगपच्चिरं क्षिप्रमिति काललिङ्गानि ॥६॥

पञ्च भूतानि तत्सम्बन्धिनो विशेषगुणाश्च उक्ताः। गुणकथनं न तन्निरूपणपरत्वेन। अपि तु साधर्म्यवैधर्म्याभ्यां द्रव्यतत्त्वविवेकायैव। अथाद्य क्रमप्राप्तकालनिरूपणं क्रियते। तत्र प्रथमं तत्सिद्धौ प्रमाणमाह। अपरं अपरत्वाख्यगुणवत्। परं परत्वाख्यगुणवत्। ज्यायसि परत्वम्। कनीयसि अपरत्वम्। तत्र परत्वं विप्रकृष्ट-

किञ्चित्सम्बन्धजन्यम् । अपरत्वं सन्निकृष्टकिञ्चित्सम्बन्धजन्यम् । अबाधितप्रतीतिव्यवहाराभ्यां अनयोः गुणयोः सिद्धयोः यत्सम्बन्धेन इमौ गुणौ जायेते स कालः, इति परत्वमपरत्वं च काललिङ्गम् । युगपत् समकालम् । अयुगपत् भिन्नकालम् । चिरं दीर्घं कालम् । क्षिप्रं अल्पेन कालेन । इति एवंरूपाः प्रत्ययाः, तन्मूलाः व्यवहाराश्च कालस्य लिङ्गानि तत्सत्त्वे प्रमाणानि । अनुमापका हेतव इत्यर्थः । इमे प्रतीतिव्यवहाराः यथार्थाः, अबाधितविषयत्वात्; प्रमात्मकगोत्वादिप्रतीतिवदित्यनुमानप्रयोगः । अपरस्मिन् परमिति केषाञ्चित् पाठः । उपरि पदद्वन्द्वद्वयवत् इदमपि समानरूपं द्वन्द्वमिति युक्तम् ।

८७. द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥७॥

तस्येति आकाशसूत्रवदनुसन्धेयम् । तस्य कालस्य द्रव्यत्वं च वायुप्रकरणोक्तन्यायेन सिद्ध्यति । इदमिदानीमस्ति, इदं पूर्वमासीत्, इदं परस्ताद् भविष्यति, इदं सर्वदाऽस्ति, इति व्यवहारबलात् द्रव्यगुणकर्मात्मकसर्वाधारत्वं कालस्य सिद्धम् । यद्यपि सर्वाधारत्वं न समवायसम्बन्धेन पृथिव्यादेर्गन्धाद्याधारत्वमिव, तथापि विलक्षणेन "कालिकः" इत्येवमेवाभिधीयमानेन सम्बन्धेन । तदप्याधारत्वं मुख्यमेव । यथा समवायसम्बन्धेन कपालस्येव संयोगसम्बन्धेन भूतलस्य घटाधारत्वम् । न च द्रव्यगुणकर्माधारत्वं अद्रव्यस्य सम्भवतीति वायुवत् कालस्यापि द्रव्यत्वम् । तस्य अवयवराहित्ये प्रमाणाभावेन कार्यत्वाभावान्नित्यत्वम् । वायुपरमाणोरिव ।

८८. तत्त्वं भावेन ॥८॥

अपरं परमिति लिङ्गाविशेषात् विशेषलिङ्गाभावाच्च सत्तान्यायेन एकत्वं कालस्य । ननु कालस्यैकत्वे भूतभविष्यद्वर्तमानभेदः कथम् । कथं च क्षणमुहूर्तादिभेदः । उपाधिभेदात् । ध्वस्तस्य घटस्य भूतः कालः । विद्यमानस्य वर्तमानः । अनुत्पन्नस्य भविष्यन् । एवं एकक्षणावस्थायिपदार्थावच्छिन्नः कालः क्षणः । मुहूर्तकालावस्थायिपदार्थावच्छिन्नः मुहूर्तः । सूर्यदर्शनावच्छिन्नः कालो दिनम् । अदर्शनावच्छिन्नः कालो रात्रिः । मेघावरणादिनाऽदर्शनमादाय दोषोद्भावनपरिहाराय यथोचितं परिष्कारे यतितव्यम् ।

**८९. नित्येष्वभावादनित्येषु भावात् कारणे कालाख्येति ॥९॥**

कालस्य आकाशादिव्यावृत्तं सर्वकार्यकारणत्वाख्यं विशेषमाह । काल इत्याख्या व्यवहारः । इयं न केवले आकाशादितुल्ये कस्मिंश्चिद् द्रव्ये, अपितु कारणे सर्वकार्यकारणभूते । कालः सर्वकार्यकारणमित्यर्थः । कुतः अन्वयव्यतिरेकाभ्याम् । इदमाह नित्येष्विति । कस्य भावोऽभावश्च । अस्मिन् काले इदमुत्पद्यत इति व्यवहारस्य । वसन्ते पुष्पाणि जायन्ते । वर्षासु देवो वर्षति । शरदि पर्णानि पतन्ति । इत्यादेः । नैष नित्येषु भवति । उत्पत्तेरेवाभावे तस्यां कालविशेषान्वयायोगात् । अनित्येषु भवति च । इदानीं घटो जातः । इदानीं इदं पक्वम् इति । ननु इदानीमिति सामग्रीसन्निधानमुच्यते, न काल इति चेन्न । इदानीमित्यस्य पदस्य काल एव शक्तत्वात् । सामग्रीसन्निधानस्य तदवच्छेदकत्वात् । वसन्ते वृक्षाः पुष्प्यन्ति फलन्ति चेति व्यवहारतुल्य एवायं व्यवहारः । यदा सामग्री सन्निहिता तदा घटो जायते, इति कालस्य कारणत्वमभिप्रेत्यैव व्यवहार इति स्पष्टम् । आकाशः सर्वदाऽस्ति, घटः पूर्वमासीत्, इत्यादिभिर्व्यवहारैः कालस्य सर्वाधारत्वं प्रतीयत इत्यन्यदेतत् । वसन्ते पुष्पाणि जायन्त इत्यादिभिर्व्यवहारैः तस्य सर्वकार्यकारणत्वमन्यत्रोच्यत इत्यववेयम् । इतिशब्दः कालप्रकरणावसानसूचनार्थः ।

**९०. इत इदमिति यतस्तद् दिश्यं लिङ्गम् ॥१०॥**

व्यवहितमपि अपरं परमित्येतदनुषज्यते । इतः अस्माद् वस्तुनः, इदं वस्तु अपरं, परमिति प्रतीतिः व्यवहारश्च यतः यस्माद् विषयतया हेतुभूतात् भवति, तत् अपरत्वं परत्वं च दिश्यं दिक्सम्बन्धि लिङ्गम् । दिशः साधकं प्रमाणमित्यर्थः । दक्षिणसमुद्रस्य हिमाचलात् विन्ध्यः अपरः । अस्मात् हिमाचलः परः । अपरत्वं सन्निकृष्टदिक्संयोगात् जायमानो गुणः । परत्वं विप्रकृष्टदिक्संयोगात् जायमानो गुणः । अस्य अपरत्वस्य विन्ध्ये, परत्वस्य हिमाचले च जनकं हि किञ्चित् कारणं वाच्यम् । तत् कारणं दिगित्युच्यते ।

**९१. द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥११॥**

तस्याः द्रव्यत्वं नित्यत्वं च वायुन्यायेन सिद्धम् । द्रव्याद्याधारत्वात् द्रव्यत्वम् । कार्यत्वाभावेन वायुपरमाणुवन्नित्यत्वम् ।

९२. तत्त्वं भावेन ॥१२॥

परमपरमिति लिङ्गविशेषात् विशेषलिङ्गाभावाच्च सत्तान्यायेन दिशोऽप्येकत्वम् । सर्वत्र तत्तद्धेतुभूतानां आकाशकालदिशामेकत्वे सति विभुत्वमपि सिद्ध्यति ।

९३. कार्यविशेषेण नानात्वम् ॥१३॥

स्वरूपतः एकस्या अपि दिशः कार्याणां तत्रोत्पद्यमानानां उपाधीनां विशेषेण भेदेन नानात्वं विभिन्नव्यवहारविषयत्वं भवति । कथम् ? तदुच्यते—

९४. आदित्यसंयोगाद् भूतपूर्वाद् भविष्यतो भूताच्च प्राची ॥१४॥

आदित्यसंयोग इत्यविशेषेणोक्तावपि अर्थात् योग्यो विशेषोऽनुसन्धेयः । आदित्यस्य प्रथमसंयोगो यत्र भवति स दिग्भागः प्राचीत्युच्यते । न च "आदित्यस्य प्रथमः संयोगः क्षणिकः । तस्मिन् अजाते वा नष्टे वा प्राचीत्वं न स्यात्" इति शङ्कनीयम् । चिराद् भूतपूर्वो वा श्वः प्रभृति भविष्यत् वा अद्य प्रातर्भूतो वा यः कश्चन संयोगो गृह्यताम् । तदवच्छिन्ना दिक् प्राची ।

९५. तथा दक्षिणा प्रतीची उदीची च ॥१५॥

तथा आदित्यसंयोगविशेषैरेव अन्या अपि दिशो भवन्ति । प्राङ्मुखं स्थितस्य पुरुषस्य दक्षिणपार्श्वे प्रसृतैः रश्मिभिः यया दिशा आदित्यः संयुज्यते सा दक्षिणा । एकस्मिन् दिने आदित्यस्य चरमः संयोगः यत्र भूतपूर्वो भविष्यन् भूतो वा सा प्रतीची । प्राङ्मुखस्य पुरुषस्य वामपार्श्वे प्रसृतैः रश्मिभिः यया दिशा आदित्यः संयुज्यते सा उदीची । कर्कटादिषु षट्सु मासेषु आदित्यः यया संयुज्यते सा दक्षिणा । मकरादिषु षट्सु यया संयुज्यते सा उदीची, इत्यपि सुवचम् ।

९६. एतेन दिगन्तरालानि व्याख्यातानि ॥१६॥

एतेन प्राच्यादिनिरूपणेन दिगन्तरालानि, दिशोर्दिशोर्मध्यानि, दिक्कोणाः, विदिशः, लक्षितानि भवन्ति । प्राग्दक्षिणा, प्रत्यग्दक्षिणा, प्रत्यगुदीची, प्रागुदीचीति ।

अवसितं दिक्प्रकरणम् ।

९७· सामान्यप्रत्यक्षाद् विशेषाप्रत्यक्षाद्
विशेषस्मृतेश्च संशयः ।।१७।।

शब्दस्य गुणत्वं कार्यत्वं च सिद्धं कृत्वा तेन आकाशसिद्धिः पूर्वमुक्ता। तस्य तदुभयसाधनाय अद्य प्रकरणान्तरमारभ्यते । तत्र संशयपूर्वकत्वाद् विचारस्य प्रथमं संशयमेव तद्धेतुभिर्निरूपयति ।

एकस्मिन् विरुद्धनानाप्रकारकं ज्ञानं संशयः । स कथं जायत इति चेदुच्यते । सामान्यस्य धर्मिद्वयसाधारणस्य धर्मस्य ऊर्ध्वत्वादेः प्रत्यक्षात् इन्द्रियजन्यज्ञानात्, विशेषस्य एकधर्मिमात्रवृत्तेः इतरव्यावर्तकस्य स्थाणुत्वपुरुषत्वादेः अप्रत्यक्षात् प्रत्यक्षज्ञानाभावात्, विशेषस्य स्थाणुत्वपुरुषत्वादेः स्मृतेः स्मरणाच्च भवतीति । अनतिप्रकाशे स्थले ऊर्ध्वं 'वस्तु' किमपि दृष्ट्वा संशेरते "अयं स्थाणु र्वा पुरुषो वेति" । तत्र इदं हेतुत्रयमस्ति । अथवा इदं समुदितं एको हेतुः ॥

९८· दृष्टं च दृष्टवद् द्रष्टा ।।१८।।

संशये हेत्वन्तरमाह । दृष्टं पूर्वं दृष्टं यज्ञदत्तं दृष्टवत् पूर्वदृष्टकञ्चुकोष्णीषधारि देवदत्तमिव, एतद्वत् कञ्चुकोष्णीषधारिणमित्यर्थः । द्रष्टा च, एवं दर्शनाच्च संशयो भवति । अयं यज्ञदत्तो देवदत्तो वेति । यज्ञदत्तस्य आकारविशेषः, देवदत्तवेषः तेन ध्रियमाणश्चेति द्वौ विशेषौ दृश्यमानौ विशेषान्तरद्वयावगाहिनं संशयं जनयतः । चकारेण हेत्वन्तरसमुच्चयः प्रतीयते । मुखं व्यादाय स्वपितीत्यत्र पूर्वकालत्वस्येव दृष्ट्वा संशयः इत्यत्र समानकर्तृकत्वस्याविवक्षा ।

९९· यथा दृष्टमयथादृष्टं चोभयथा दृष्ट त्वात् ।।१९।।

प्रथमं चैत्रः शिखावान् दृष्टः । ततः कृत्तशिखः । एवमुभयथा दर्शनानन्तरं पुनः कदाचिद् दूरे दृष्टः । तदानीं तस्य शिखावत्त्वे 'चैत्रः शिखारहितोऽपि भवति । तस्मादयं चैत्रो न वे'ति संशयो भवति । विशिखत्वेऽपि स शिखावानपि तदयं स वा न वेति संशयो भवति । तस्मादेकस्य पूर्वमुभयथा दर्शनमपि पश्चात् संशयहेतुः ॥

१००. विद्याऽविद्यातश्च संशयः ।।२०।।

विद्या ज्ञानम् । अविद्या ज्ञानाभावः । ताभ्यामपि संशयो भवति । ज्ञाने जाते विद्यमानमपि रजतं ज्ञायते । अविद्यमानमपि शुक्तौ । तस्मात् विषयो वस्तुतो विद्यते

न वेति संशयो भवति। ज्ञानाभावेऽपि विद्यमानस्यापि ज्ञानाभावो भवति। यथा भूम्यन्तर्गतस्य जलस्य। तस्मात् किं विद्यमानस्य ज्ञानाभावः उत अविद्यमानस्येति संशयो भवति। "उपलब्ध्यनुपलब्ध्यव्यवस्थातः संशयः" इति तन्त्रान्तरे यदुक्तं तदेवात्रापीति युक्तं ग्रहीतुम्। संशय इति पुनरुक्तिः संशयप्रकरणसमाप्तिसूचनाय।

यद्यप्यत्र सर्वत्र "सामान्यग्रहणात् विशेषाग्रहणात् विशेषस्मृतेश्च संशयः" इति प्रथमः प्रकारः समन्वित इति दर्शयितुं शक्यते तथापि मुख्यतः इमे प्रकारभेदाः सन्तीत्येतन्नापह्नवार्हम्।

एवं सामान्यतः संशयहेतून् उक्त्वा शब्दविषयो विचाराङ्गभूतो यः संशयः तद्धेतुभूतं विशेषं दर्शयति—

**१०१. श्रोत्रग्रहणो योऽर्थः स शब्दः ॥२१॥**

श्रोत्रं श्रवणेन्द्रियं ग्रहणं ग्राहकं यस्तादृशः यः अर्थः द्रव्यगुणकर्मान्यतमरूपः पदार्थः सः शब्दः शब्दपदवाच्यः। श्रोत्रग्राह्यत्वं शब्दस्य विशेषः असाधारणधर्म इत्युक्तं भवति॥

अनेन विशेषेण जायमानं संशयमाह—

**१०२. तस्मिन् द्रव्यं गुणः कर्मेति संशयः ॥२२॥**

अस्मिन् श्रोत्रग्राह्यत्वरूपविशेषवति शब्दे संशयः किमिति। द्रव्यं वा गुणो वा कर्म वेति। सत्तासामान्यवत्त्वात् शब्दत्वरूपसामान्यविशेषवत्त्वाच्च द्रव्यगुणकर्मान्यतमत्वं सिद्धम्। तेषु किमिति संशयः। तत्रहेतुमाह—

**१०३. तुल्यजातीयेष्वर्थान्तरभूतेषु विशेषयोरुभयथा दृष्टत्वात् ॥२३॥**

शब्दो गुण इति कृत्वा तस्याश्रयतया आकाशस्य सिद्धिरिति पूर्वमुक्तम्। तेन गुणाः तस्य सजातीयाः। द्रव्याणि कर्माणि चार्थान्तराणि। अन्ये पदार्थाः विजातीया इत्यर्थः। शब्दस्य श्रोत्रग्राह्यत्वरूपो यो विशेषः सः तुल्यजातीयेषु गुणेषु न विद्यते। अतुल्यजातीयेषु द्रव्यकर्मस्वपि न विद्यत इत्युभयथा दृष्टः। एवमस्योभयथा दृष्टत्वात् संशयो भवति। श्रोत्रग्राह्योयं अतथाभूतत्वात् सर्वेषां गुणानां गुणो न भवितुमर्हति। तथैव द्रव्याणां कर्मणां च सर्वेषां श्रोत्रग्राह्यत्वाभावात् द्रव्यं वा कर्म वा न भवितुमर्हति। भवितव्यं तु एषामन्यतमेन। सत्तासामान्यवत्त्वात्। तत् द्रव्यं वा गुणो वा कर्म वा

अयमिति । सत्तया अन्यतमः पदार्थो भवितुमर्हतीति प्रतीतिर्भवति । विशेषस्योभयथा दर्शनात् न भवितुमर्हतीति प्रतीतिर्भवति । अनयोः प्रतीत्योर्विरोधात् संशयः विरुद्धप्रतीतिजननद्वारा संशयहेतुः उभयथा दृष्टो विशेषः ।

नन्वसाधारणधर्मस्य एतन्मते संशयहेतुत्वं नास्तीति चेन्न । प्रत्यक्षं सूत्रकारे तद्वदति तदितरोक्तेरश्रद्धेयत्वात् । परमतमभ्युपेत्येदमुक्तमिति वा मन्यताम् । अथ गन्धवत्त्वरूपं विशेषमादाय पृथिव्यामपि द्रव्यं गुणः कर्मेति संशयः "तुल्यजातीयेष्वर्थान्तर भूतेषु विशेषस्योभयथा दृष्टत्वात्" इति सुवचम् । स्नेहमादायाप्स्वपि । तत् कथं शब्दमात्र एवं विचार इति चेदुच्यते । पृथिव्यादौ गुणत्वादिवादो न कैश्चिदवलम्बितः । शब्दे द्रव्यत्ववादस्तु मीमांसकैः प्रवर्तितः । तन्निराकरणाय विशिष्य शब्देऽयं विचार इति ॥

तत्र द्रव्यत्वकोटिं निवर्तयति—

**१०४. एकद्रव्यत्वान्न द्रव्यम् ॥२४॥**

एकमेव समवायिकारणभूतं द्रव्यं यस्य तत् एकद्रव्यम् । तस्य भावः तत्त्वम् । तस्मात् । शब्दः न द्रव्यम्, एकद्रव्यत्वात्, कर्मवत् । शब्दः कार्यमिति वक्ष्यते । स यदि द्रव्यं, अनेकद्रव्यारब्धो भवेत् घटपटवत् । न चैवं सः । आकाशात्मकैकद्रव्यारब्धत्वात् । अतः न द्रव्यम् ।

अथ गुणत्वकोटेरिष्टत्वात् कर्मत्वकोटिं निवर्तयति—

**१०५. नापि कर्माचाक्षुषत्वात् प्रत्ययस्य ॥२५॥**

शब्दः कर्मापि न, प्रत्ययस्य तद्विषयकस्य ज्ञानस्य अचाक्षुषत्वात् । चाक्षुषभिन्नत्वात् । चक्षुर्जन्यज्ञानभिन्नत्वात् । चक्षुरजन्यज्ञानविषयत्वादित्युक्तं भवति । अत्र चक्षुःपदं कर्मग्रहणयोग्येन्द्रियपरम् । ईदृशेन्द्रियाजन्यप्रत्यक्षज्ञानविषयत्वादिति पर्यवसितो हेतुः । गन्धादिवदित्युदाहरणं द्रष्टव्यम् ।

अथाभिमतं गुणत्वमनुवदन् कर्मत्वशङ्काबीजं प्रकारान्तरेणोपपादयति ।

**१०६. गुणस्य सतोऽपवर्गः कर्मभिः सामान्यम् ॥२६॥**

बलवन्नुन्ने शरे पतनात्पूर्वं कर्मपरंपरा जायते । पूर्वं कर्म नश्यति । अन्यत् कर्म जायते । इदं नश्यति । पुनरन्यत् कर्म जायते । एवमान्तम् । एवमेव भेर्यां जातात् शब्दात् कर्णगोचरशब्दपर्यन्तं महती शब्दपरम्परा । पूर्वं शब्दो नश्यति । अन्यः शब्दो जायते ।

उत्तरोत्तरमेवम्। एवं यतः पूर्वंपूर्वं नाशः कर्मपरम्परायामिव शब्दपरम्परायामस्ति अतः शब्दः कर्मेति शङ्क्येत। तत्रोच्यते। गुणस्य सतः गुणभूतस्यैव शब्दस्य अपवर्गः पूर्वंपूर्वस्य नाशः कर्मभिः सामान्यंसाधारणधर्मवत्त्वम् ननु कर्मत्वापादको हेतुः।

न हि बलवता प्रमाणेन भिन्नजातीयत्वेन अवधृतानां पदार्थानां साधर्म्यमात्रेण एकजातीयत्वं भवतीति भावः।

शब्दगुणप्रकरणं समाप्तम्। अथ तदनित्यत्वप्रकरणम्। तत्र प्रथमं तस्य श्रवणपूर्वापरकालसत्त्वे प्रमाणा भावमाह—

**१०७. सतो लिङ्गाभावात् ॥२७॥**

सतः श्रवणकालात् पूर्वमनन्तरं च सतः विद्यमानस्य शब्दस्य लिङ्गं ज्ञापकं प्रमाणं तस्याभावात्। अयमनित्य इत्युपर्यन्वयः। नित्यो हि त्रिकालवर्ती। श्रवणकालात्पूर्वमनन्तरं चासन् कथं नित्यः स्यात्। तत्र असत्वं कथमिति चेत् सत्वावेदकप्रमाणाभावात्। नहि अप्रमाणकं किञ्चिदभ्युपगमर्महति।

**१०८. नित्यवैधर्म्यात् ॥२८॥**

अनित्यत्वे प्रमाणमाह। नित्यात् पदार्थात् वैधर्म्यात् विलक्षणत्वात्। तदवृत्तिधर्मत्वादित्यर्थः। नित्यो हि सर्वकालवर्ती। अयं तु कादाचित्कः अल्पकालवर्ती द्विक्षणावस्थायी अतो न नित्यः॥

**१०९. अनित्यश्चायं कारणतः ॥२९॥**

अयं शब्दः कारणतः तज्जनकोच्चारणादिकारणवत्त्वाच्चानित्यः उत्पत्तिविनाशवान्। अनित्यश्च। न परं गुणः अनित्यश्चेत्यपि चकारयोजना।

"सदकारणवन्नित्यम्" इति नित्यलक्षणं वक्ष्यति। तत्र प्रपूर्वसूत्रोक्तः सत्त्वाभावः गतसूत्रोक्तः अकारणवत्त्वाभावश्च मध्ये "नित्यत्ववैधर्म्यात्" इत्यनेनाभिप्रताविति सुवचम्॥

ननु उच्चारणादिकं न शब्दस्योत्पत्तिकारणम्। शब्दस्य कार्यत्वे सिद्धे हि तत् तत्र कारणमिति गृह्णीयाम। शब्दो नित्यः। उच्चारणादिकमभिव्यञ्जकमिति किं न स्यात्। अत्राह—

**११०. न चासिद्धं विकारात् ।।३०।।**

अनित्यत्वे हेतुतया निर्दिष्टं कारणवत्त्वं न च नैव असिद्धं पक्षे असत्त्वरूपासिद्धिदोषवत् । कुतः । विकारात् । शब्दे हि अवस्थान्तररूपो विकारो भवति । यथा—"दधि" इति स्थितः इकारः "दध्यत्र" इति यकाररूपेण विक्रियते । न च अकार्यस्य विकारो भवेत् । तस्मात् कार्यः, उत्पत्तिमान् शब्दः । अत एव कारणवांश्च । अतो नासिद्धिर्हेतोः ।।

न केवलं साधकसत्त्वात् कार्यत्वं शब्दस्य । अपितु अभिव्यक्तौ बाधकसत्वाच्चेत्याह—

**१११. अभिव्यक्तौ दोषात् ।।३१।।**

यद्युच्चारणात् प्रागपि शब्दोऽस्ति तर्हि कुतो नोपलभ्यते । तिरोधानादिति चेत् केन । किञ्चिदस्ति, यत् तिरोदधाति, इति चेत् यद्यस्ति उपलभ्येत न चोपलभ्यते । उच्चारणात् प्राक् शब्दस्य सत्त्वकल्पना, अनुपलभ्यमानतद्धेतुभूतवस्तुकल्पना, इति अप्रामाणिककल्पनापरम्परारूपो दोष आपतति । तस्मान्नाभिव्यक्तिः शब्दस्य । अपितु उत्पत्तिरेव । अतः सिद्धं शब्दस्य कार्यत्वम् ।।

**११२. संयोगाद्विभागाच्छब्दाच्च शब्दनिष्पत्तिः ।।३२।।**

भेरीदण्डसंयोगात् शब्दो जायते । तथा वेणुदलविभागात् । आभ्यां शब्दाभ्यां च तदुत्तरौ शब्दौ । एवं त्रेधा शब्दो जायते । त्रिविधोऽप्ययं ध्वन्यात्मकः । अयं घटपटादिवत् स्वकारणादुत्पद्यत इति प्रत्यक्षमसन्दिग्धं पश्यामः । नात्र व्यङ्ग्यत्वशङ्काया मनागप्यवसरः । एवमेव वर्णात्मकशब्देऽपि शङ्का न युज्यत इति भावः ।।

**११३. लिङ्गाच्चानित्यः ।।३३।।**

वेदादपि शब्दस्यानित्यत्वमध्यवसेयमित्याह । वेदस्यापि अनुमानविधयैव प्रमाणत्वात् "बुद्धिपूर्वा वाक्यकृतिर्वेदे" इति वक्ष्यमाणरीत्या वेदस्यानुमितिविशेषे हेतुत्वाच्च लिङ्गशब्देन तदभिधानम् । न केवलं उक्ताभिर्युक्तिभिः शब्दोऽनित्यः । अपि तु वेदादपि इति चकारार्थः । अनित्य इत्यस्य धर्मी शब्द इति प्रकरणाल्लभ्यते ।

"यद्वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः। तस्य प्रकृतिलीनस्य यः परः स महेश्वरः।" इति श्रुतिः। सर्ववेदमूलस्य प्रणवस्य प्रकृतिरकार इहोक्तः। प्रकृतिः उपादानकारणम्। तदिह वर्णानां प्रकृतिविकारभावोक्तेः तेषामनित्यत्वं प्रतिपादितं भवति।

वेद एव शब्दस्यानित्यत्वमाहेत्येतच्छ्रुत्वा वैदिकः प्रत्यवतिष्ठते।

**११४. द्वयोस्तु प्रवृत्त्योरभावात् ॥३४॥**

तुकारः पूर्वोक्ते आक्षेपसूचनार्थः। शब्दस्यानित्यत्वे आचार्यस्य शिष्यस्य चेति द्वयोः क्रमेण वेदविद्यादानरूपाया प्रवृत्तिः, या च तद्ग्रहणरूपा प्रवृत्तिः तयोरभावप्रसङ्गः। आचार्येणोच्चारितस्य शब्दस्य तदैव नाशात् शिष्येण तद्ग्रहणासम्भवात्, अभावप्रसङ्गान्न शब्दोऽनित्यः इति पूरणमर्थाल्लभ्यते।

**११५. प्रथमाशब्दात् ॥३५॥**

अत्र "त्रिः प्रथमामन्वाह" इति विधिस्थः प्रथमाशब्दोऽभिप्रेतः। एकादशासु ऋक्षु प्रथमा त्रिरावर्तनीयेति विधिवाक्यार्थः। शब्दो नित्यश्चेत् ऋक् त्रिरावर्त्यंत इति युज्यते। तदनित्यत्वे तु प्रथमपठिता ऋक् तदैव नष्टा भवति। द्वितीयवारं पठ्यमाना अन्यैव ऋक् भवति। एवं तृतीयवारं पठ्यमानाऽपि। तथा च आवृत्तिर्न घटते। द्वितीयतृतीययोःप्रथमात्वपि न घटते। अतः शब्दनित्यत्वं वेदादवगम्यते।

**११६. सम्प्रतिपत्तिभावाच्च ॥३६॥**

सम्प्रतिपत्तिः स एवायमिति प्रत्यभिज्ञा। तस्या भावाच्च सत्त्वाच्च शब्दनित्यत्वम्। सोयं गकारः इति हि प्रत्यभिज्ञा सार्वत्रिकी। चकारः पूर्वहेतुसमुच्चयमिव पूर्वपक्षावसानमपि द्योतयति।

**११७. सन्दिग्धाः सति बहुत्वे ॥३७॥**

बहुत्वे सति, अनित्यत्ववादिनां अस्माकं सिद्धान्तिनां शब्दा बहवः। तदा तदा उच्चार्यमाणा गकारादयो भिन्नभिन्नाः सन्तो बहवो भवन्ति। तत्र आचार्येणोच्चारितस्य वर्णस्य नाशेऽपि तन्मूलतत्सजातीयवर्णपरम्परायामेकः शिष्यकर्णं प्राप्तः तेन गृह्यते। अतो द्वयोः प्रवृत्त्यभावप्रसङ्गरूपो हेतुः सन्दिग्धः। अनैकान्तिकः।

हेत्वाभास इत्यर्थः। प्रथमाशब्दोपि कथञ्चिदुपपादनीय इति सोऽपि हेत्वाभासः। एवं प्रत्यभिज्ञाऽपि। स एव व्रीहिरिति हि व्यक्तिभेदेपि जात्येकत्वप्रयुक्तो व्यवहारः। प्रबलप्रमाणवशात् अनित्यत्वे, तेन बहुत्वे च सिद्धे सति एकताहेतवः असाधका हेत्वाभासा भवन्तीत्यर्थः।

११८ **संख्याभावः सामान्यतः ॥३८॥**

संख्यायाः प्रथमात्वस्य द्वितीयतृतीयपठितयोः ऋचोः भावः सामान्यतः ऐकरूप्यात् शब्दव्यक्तिभेदेऽपि वर्णात्मकानां शब्दानां शब्दानुपूर्व्याश्च समानत्वादित्यर्थः। उपपादनीय इति शेषः। श्रुतिरपि दृष्टानुरोधेनैव नेयेति ज्ञापनार्थमस्य पृथगुक्तिः।

आकाशगुणस्य शब्दस्य गुणत्वानित्यत्वस्थापनस्य कालदिङ्निरूपणात् पूर्वमेव औचित्येऽपि आत्मनो भोगे "प्रसिद्धा इन्द्रियार्थाः" इत्यनुपदं निर्देक्ष्यमाणानां रूपरसगन्धस्पर्शशब्दानां भोग्यविषयतया प्रधानत्वस्य, अदृष्टानुरोधेन क्लृप्ते काले देशे च भोग इत्यधिकरणतया देशकालयोरुपसर्जनत्वस्य च व्यञ्जनाय शब्दविचारस्य कालदिङ्निरूपणानन्तरं अध्यायान्ते निबन्ध इति बोध्यम् ॥

इति कणादसूत्रवृत्तौ सुगमायां द्वितीयाध्याये द्वितीयमाह्निकम् ॥

●●●

महामहोपाध्याय इन्द्रपतिप्रणीतम्

# मीमांसारसपल्वलम्

सम्पादकः

डा० किशोर नाथ झा

●●●

[ मैथिलश्रोत्रियवंशावतंसस्य मीमांसकप्रवरस्य इन्द्रपतिशर्मण: कृतिरियं मीमांसारसपल्वलं नाम धर्मशास्त्रानुमोदिते कर्मकाण्डविषये मैथिलनिबन्धकाराणामाशयस्य स्पष्टीकरणे नितरामुपयोगिनी। मैथिल मीमांसकस्य पुण्यश्लोकस्य म० म० डा० गङ्गानाथझामहोदयस्य नाम्ना प्रचलिते तद्यश:संरक्षणपरेविद्यापीठेऽस्मिन्, सुरक्षिते अस्या: कृते: मातृके-द्वे अवलम्ब्य पत्रिकायां लघुपुस्तकस्य प्रकाशनं भवत्विति नीतेः कार्या-न्वयनाय सम्पादनमेतद् ग्रन्थस्य कृत्वेह विदुषां पुरत उपस्थाप्यते। पृथग् ग्रन्थरूपेणाप्यस्या: अनुमुद्रणेऽवतरणपरिशिष्टादिकस्यावश्यक सामग्रीसंग्राहकस्य समावेश: स्यादेवेति]

इन्द्रपतिप्रणीतम्

# मीमांसारसपल्वलम्

ओं नमो महागणेशाय

जित्वा शङ्खमुरद्विषं धृतवते वेदान्निमग्नान् धरा—
मुद्धर्तुं कमठाकृतिं कृतवते कोलाकृतिं कुर्वते।
दैवारातिहिरण्यदैत्यदलने सैंहीं तनुं बिभ्रते
विद्वद्भार्गववाहुजाकृतिकृते तुभ्यं नमः श्रीपते ॥१॥

सिद्धान्तसन्तानमधीत्य जैमिनेः—
गोपालभट्टस्य गुरोः सकाशात्।
संक्षेपतश्चालनमात्रमेषां—
नत्वा शिवामिन्द्रपतिः करोति ॥२॥

यं लेमे रुक्मिणी देवी सूरे[?]रुचिपतेः सुतम्।
स तनोति शिवं नत्वा **मीमांसारसपल्वलम्** ॥३॥

अविवेको मिथिलायाः शिशुरेको धीरमर्थयति।
बालकखेलनहेलनबुद्धया कोपो मयि त्याज्यः ॥४॥

**[अवतरणम्]**

इह खलु त्रिविधा विधयो भवन्तीति तल्लक्षणानि **जैमिनिमुनयो विधिर्वा स्यादपूर्वत्वान्नियमार्थो वा पुनः श्रुतिरुच्यते परिसंख्येति त्रिविधानि तावदसूत्रयन्। तान्येव विशदयद्भिर्भट्टपादैरकारि कारिका—**

विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति ।
तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते ॥
इति [तन्त्रवार्तिकम्]

तत्र तावदत्यन्ताप्राप्तप्रापकत्वमपूर्वविधिलक्षणम् । तच्चाग्निहोत्रं जुहोतीत्यादौ वर्तते । एतद् वाक्यं विनाग्निहोत्रस्याप्राप्तत्वादन्यत् सर्वमग्रे विवेचनीयम् ।

ते चापूर्वविधयो हि षट् प्रकारकाः । तत्र धात्वर्थकरणिकभावनाविधानादाद्यो विधिप्रकारः । स एवोत्पत्तिविधिः । यथा 'अग्निहोत्रं जुहोति' । अत्र होमकरणिका भावनेत्यन्वयः । अन्योद्देश्येन तद्विधिरित्यपरः प्रकारः । यथा 'अग्निहोत्रं जुहुयात् स्वर्गकाम' इति । अत्र स्वर्गफलोद्देश्येन प्राकृताग्निहोत्रसम्बन्धविधिः । अत्राग्निहोत्रांशे प्राप्तावपि तत्सम्बन्धेऽप्राप्तिरेव । तस्योद्देश्ये वाचकपदसापेक्षतया दौर्बल्यमिति । धात्वर्थोद्देश्येनान्यकरणकत्वविधानमिति तृतीयः पक्षः । यथा 'दध्ना जुहोतीत्यत्र' प्राप्ताग्निहोत्रोद्देश्येन दधिकरणकत्वं विधीयते । धात्वर्थांशे प्राप्त्याऽत्र विधेयताया धात्वर्थवृत्तित्वाभावात्, पदार्थान्तरवृत्तित्वाच्च । ततोऽपि दौर्बल्यम् । धात्वर्थभिन्नोद्देश्येनान्यकरणकत्वाभिधानमिति चतुर्थो विधिः । यथा 'दध्नेन्द्रियकामस्य जुहुयादिति' । अत्र धात्वर्थस्योद्देशेनापि सम्बन्धात्ततोऽपि दौर्बल्यम् । गुणविशिष्टधात्वर्थकरणकभावनाविधानं पञ्चमः पक्षः । यथा 'सोमेन यजेते'ति । अत्र विशेषणविधिकल्पनादेवाधिक्यात्ततोऽपि दौर्बल्यम् । अन्योद्देश्येन धात्वर्थकरणकभावनाविधानमिति षष्ठः पक्षः । यथा 'सौर्यं चरुं निर्वपेत् [द्] ब्रह्मचर्यसकाम' इति । अयं तु सर्वतो दुर्बलः । तेषु क्रियाविध्यादीनामग्रे विवेचनीयतया 'दध्ना जुहोती'त्यादिगुणविधिवाक्यं तृतीयाश्रुत्यादीनां साक्षाद् गुणकर्मणोरङ्गाङ्गिभावग्रहोपयोगितया आदौ तासामधिकरणत्वं निरूप्यते ।

तत्र "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यं श्रुति [अर्थ]विप्रकर्षादिति' जैमिनिसूत्रम् [३।३।१४]

[श्रुतिलक्षणम्]

तत्राद्या श्रुतिस्तल्लक्षणम् अङ्गत्वघटकीभूतपरोद्देश्यताकृतिकारत्वान्यतरवाचकप्रधानशब्दत्वम् । तच्च 'व्रीहीन् प्रोक्षती'त्यादौ द्वितीयायां 'पशुना रुद्रं यजेते'त्यादौ

तृतीयायां च वर्तते । अङ्गत्वघटकीभूताया उद्देश्यताकृतिकारकताया तदन्यतरवाचकत्वस्य व्रीहिपशुपदयोर्द्वितीयातृतीययोश्च सत्त्वात् । यथा हि संस्कारविशिष्टव्रीह्युद्देश्येन प्रोक्षणं विधाय व्रीहीनित्यादिवाक्ये तु द्वितीयायास्तादृशोद्देश्यतार्थकत्वात् । 'पशुना रुद्र'मित्यादौ यागसाध्यभावनायाः पशौ तृतीयायास्तादृशकरणत्वबोधकत्वात् । कृदन्तनिष्ठतृज।दिव्यावृत्त्यर्थं प्रधानशब्देति । तेषां कारकत्वविशिष्टद्रव्यवाचित्वेन प्राधान्येन कारकत्वाबोधनात् । अत एव 'प्रोक्षिताभ्यामुदूष[ख]लमुश[स]लाभ्यामवहन्ती'त्यादौ वाक्यीय एव विनियोगो न श्रौत' इति । अत्र प्रोक्षणकर्मत्वविशिष्टयोरुदूष[ख]लमुश[स] लयोः कर्मत्वस्य विशेषणत्वेनान्वयो न तु विशि[शे]ष्यत्वेनेति भावः ।

## [अङ्गलक्षणम्]

अथाङ्गत्वं किमिति चेत् अत्राङ्गत्वं नाम पारार्थ्यम् । तच्च परोद्देश[श्य] प्रवृत्तकृतिकारकत्वेन विहितत्वम् । तथा च यद् यदुद्देशप्रवृत्तपुरुषकृतिकारकत्वेन विहितं भवति तत्तदङ्गमिति विशेषलक्षणम् । स्वर्गोद्देशप्रवृत्तपुरुषसमवेता या यागानुकूला कृतिस्तत्र कृतौ यागस्य कारकत्वेनैवान्वयात् । न चानुभवविरोधः । 'स्वर्गकामो यजेते'त्यादौ स्वर्गोद्देश्यककृतौ करणत्वेनान्वितस्य यागस्य कारकत्वानुभवात् । अथवा परोद्देश्यककृतिकारकत्वेन विहितत्वं, यागस्यापि 'यजेते'त्यादौ कारकत्वेनान्वयात् । तथा च यद्यदुद्देश्यककृतिकारकत्वेन विहितं तत्तदङ्गम् । 'यजेते'त्यादौ यागस्य, 'सोमेन यजेते'त्यादौ द्रव्यस्य, 'लोहितोष्णीषा ऋत्विजः प्रचरन्ती'त्यादौ लौहित्यगुणादेः करणत्वेन, 'स्वर्गकाम' इत्यादौ स्वर्गकामस्य कर्तृत्वेन, 'मासि मासि श्राद्धं कुर्यादि'त्यादौ मासस्वरूपकालस्य 'गयायां श्राद्धं कुर्यादि'त्यादौ गयादेशस्याधिकरणत्वेन विहितत्वादङ्गत्वमक्षतमत एव कालादेः निमित्तस्यानुष्ठापकत्वरूपोद्देश्यत्वेऽपि ईप्सिततत्त्वाख्यरूपोद्देश्यत्वाभावादनुष्ठापकत्वरूपोद्देश्यत्वविशिष्ट कालादिरूपोद्देश्यककृतिकारकत्वेन न यागस्य निमित्ताङ्गत्वम् । लक्षणे तादृश्या एवोद्देश्यताया विवक्षितत्वात् । ईप्सितत्वाख्यमुद्देश्यत्वं क्रियाजन्यफलशालित्वेनेच्छाविषयत्वम् । तच्च व्रीह्यादौ प्रोक्षणजन्यसंस्काररूपफलशालित्वं वर्तते । तस्यैव द्वितीयार्थत्वात्, निमित्तस्य न तादृशोद्देश्यत्वं किन्तु अनुष्ठापकत्वरूपम् । तथा हि 'राहूपरागे स्नायादि'त्यादौ राहूपरागस्य यथेति दिक् ।

[लिङ्गलक्षणम्]

लिङ्गं नाम अङ्गत्वघटकीभूतपरोद्देश्यताक्‍तिकारकत्ववाचकपदकल्पनानुकूला पदार्थनिष्ठा योग्यता। योग्यता च द्विधा—कारणतारूपा पदसामर्थ्यरूपा च। तथा चाङ्गत्वघटकीभूतपरोद्देश्यत्वक्‍तिकारकत्वान्यतरवाचकपदकल्पनानुकूलकारणत्ववाचकत्वान्यतररूपवत्त्वं लिङ्गमिति। 'स्रुवेणावद्यति' 'हस्तेनावद्यति' इत्यादौ स्रुवहस्तयोरङ्गत्वघटकीभूतं यत्तादृशं द्रवद्रव्यनिष्ठमुद्देश्यत्वं तद्वाचकं द्वितीयान्तं द्रवद्रव्यमिति पदं तत्कल्पनानुकूला या स्रुवादिनिष्ठा द्रवद्रव्यावदानकारणता तद्वत्त्वमादाय स्रुवादौ लक्षणसमन्वयः। तथा च 'स्रुवेणावद्यती'त्यादौ वाक्ये उद्देश्याकाङ्क्षायां द्रवद्रव्यावदानकारणताबलात् द्रवद्रव्यमित्येवपदं कल्पनीयमिति भावः।

एव'मग्निं दूत'मिति मन्त्रस्य पदसामर्थ्यरूपलिङ्गमग्नावस्ति। तथा हि 'अग्निं दूत'मित्यादि मन्त्रस्य श्रुतिं विनाऽग्न्यादौ विनियोगासम्भवेन तदर्थं' मग्निं दूत' मिति मन्त्रेणाग्निं प्रकाशयेदिति वाक्यं विनियोजकं कल्प्यं तद्वाक्यस्थम्। यदुद्देश्यवाचकमग्निमिति द्वितीयापदं तत्कल्पनानुकूलम् 'अग्निं दूत'मिति मन्त्रस्थाग्निपदेऽग्निप्रतिपादकत्वमेव। तथा चात्र मन्त्रे अग्निपदं यद्यग्निप्रतिपादकं न स्यात् किन्तु सूर्यादिप्रतिपादकं तदा प्रकाशयेदिति वाक्ये सूर्यमित्येव पदं कल्प्यं स्यात् नत्वग्निपदमिति रीत्या सर्वत्र लक्षणसमन्वयः।

तच्च योग्यताद्वयं श्रुतिकल्पनाद्वारा विनियोगप्रमाणम्। तत्र पदार्थनिष्ठाया कारणतारूपाया योग्यताया एकविधत्वात् विचारासम्भवः। पदनिष्ठायाः प्रतिपादकत्वरूपयोग्यताया नानाविधत्वादिह विविच्यते।

[मन्त्राणामर्थप्रकाशकत्वं शक्त्या लक्षणया वा?]

ननु मन्त्राणामर्थप्रकाशकत्वं किं शक्त्यैव किं लक्षणयाऽपि? नान्त्यः, लक्षणयार्थप्रकाशकत्वे मन्त्राणां क्वापि मन्त्रे ऊहो न स्यात्। 'अघोराः पितरः सन्तु' 'पित्रे स्थानमसी' त्यादौ मातृश्राद्धेऽपि पितृपदेनैव मात्रादीनां प्रकाशनस्य लक्षणयाऽपि सम्भवात्।

नापि द्वितीयः [आद्यः], ज्योतिष्टोमप्रकरणाम्नातस्य 'बर्हिर्देवसदन'मिति मन्त्रस्य मुख्य इव लक्षे[क्ष्ये]ऽपि विनियोगदर्शनात्। तथा हि ज्योतिष्टोमे श्रूयते

'उलपराजीः स्तृणाति' तत्र उ[ल]पराजीस्तृणविशेषास्तरणस्य केन मन्त्रेण प्रकाशन-मित्याकाङ्क्षायां 'बर्हिर्देवसदनं दामी'ति मन्त्रस्यानूहितबर्हिपदघटितस्यैव विनियोगे बर्हिपदेन लक्षणयैव उलपराजीप्रकाशनमस्ति। स्मारकाकाङ्क्षासामग्र्यविशेषात्। 'यष्टीः प्रवेशये'त्यादिवद् यष्टिमत्तात्पर्यग्राहकाकाङ्क्षासत्त्वेऽपि मुख्यार्थबाधस्याकिञ्चित्-करत्वात्। तस्माल्लक्षणया मन्त्राणामर्थप्रकाशकत्व आयाते 'बर्हिर्देवसदन'मित्यादि व'दघोराः पितर' इत्यादावपि ऊहो न स्यादिति चेत्? अत्रोच्यते मन्त्राणां लक्षणयाऽर्थ-प्रकाशने प्रथमं शक्यार्थोपस्थितिरनन्तरं बाधप्रतिसन्धानाल्लक्ष्यार्थोपस्थितिरिति क्षणविलम्बकल्पनागौरवम्। शक्त्यार्थप्रकाशकत्वे आहत्यैव पदार्थोपस्थित्या शाब्दबोधादिकल्पनालाघवम्।

न चोलपराजीप्रकाशनाकाङ्क्षाया उलपराजीप्रकाशनं विनाऽनिवृत्तिरिति वाच्यम् स्मरणाकाङ्क्षारूपायाः प्रकाशनाकाङ्क्षायाः[१] ध्यानाद्युपायान्तरेणापि निवृत्तेः। अत एव यत्र प्रकरणे मुख्यार्थयोगो नास्ति तत्र मन्त्राम्नानबलादेव मुख्यार्थकल्पना। यथाऽनीन्द्र-देव ाकयागप्रकरणे इन्द्रदेवताक 'आघावमाघावती'ति मन्त्रः पठितोऽस्ति। तत्र-शक्त्या इन्द्रप्रकाशनार्थमिन्द्रो देवता कल्प्यते, न तु तद्यागदेवतायां तन्मन्त्रस्य लक्षणाभ्युपगम्यते।

ननु यदि शक्त्यैवार्थप्रकाशकत्वं मन्त्राणां तदा कथमनूहितस्याग्नेयपश्वभिमन्त्रण-मन्त्रस्य 'त्वं हि मनोता प्रथममग्ने'रिति मन्त्रस्याग्नीषोमीयपशौ प्रयुक्तस्याग्निपदेना-ग्निसोमयोः प्रकाशकत्वं, लक्षणां विना तदनुपपत्तेरिति चेत् न, यद्यप्यन्यदैवत्यः पशु-स्तथा'प्याग्नेया मनोता कार्ये'ति'श्रुतिबलात्तत्र लक्षणाभ्युपगमात्। तथा च 'यत्र त्वं हि मनोते'त्यादौ यद्य'प्यन्यदैवत्यः पशुरि'त्यादि श्रुतिरस्ति। सन्निपत्योपकारकत्वलाघवानु-रोधेन लक्षणयाऽपि मन्त्राणामर्थप्रकाशकत्वमस्ति तत्र। यत्र तु श्रुतिप्रमाणं नास्ति तत्र सर्वत्र न लक्ष्या[लक्षणया]र्थप्रकाशकत्वं किन्तु शक्त्यैवेति। अतएवैन्द्र्या गार्हपत्यमुप-तिष्ठत' इत्यादिश्रुत्या प्राप्ताङ्गकत्वस्य कदाचन 'स्तवीरसि नेन्द्रसश्चे'ति मन्त्रस्य लक्षणयैव गार्हपत्योपस्थापकत्वमित्यलमधिकेन।

---

१– तालपत्रे पदमिदं नास्ति

[स्तोत्राणामारादुपकारकत्वं सन्निपत्योपकारकत्वं वा ]

एवं स्तोत्रशास्त्राणामारादुपकारकत्वमेव अग्निष्टोमयागप्रकृतिकेऽग्निष्टुतियागे श्रूयते। 'आग्नेया ग्रहा भवन्ती'ति वाक्यं प्रकृतिवद्विकृतिरितिन्यायप्राप्ताग्निष्टोमीय-दशदेवताकग्रहोद्देश्येनाग्निदेवताकयागकरणकत्वविधायकमेवंविधौ कृते सति प्रकृतिवदि-तिन्यायेन प्राप्तानामैन्द्रमाहेन्द्रमैत्रावरुणादिदशदेवतानामग्निष्टुतौ बाधप्राप्त्या तत्तद्देव-ताकमन्त्राणामपि बाधप्राप्तिरेव। तत एवान्यदेवताकस्तोत्राणामपि बाधसम्भवे स्तोत्राणां सन्निपत्योपकारकत्वपक्षे पुनर'प्याग्नेयीषु स्तुवीते'त्यस्य वैयर्थ्यापत्तिः। यथा 'आग्नेया ग्रहा भवन्ती'ति वाक्येन प्रकृतिवदिति न्यायप्राप्तानां तत्तद्दशदेवतानामेव बाधः क्रियते न तु तत्तद्देवताप्रकाशकमन्त्राणामपि। तथा च प्राकृता एव तत्तद्देवताकमन्त्रा ऊहिता अग्निप्रकाशका भवन्ति एवमूहितानामन्यदेवताकस्तोत्राणां प्रकृतिवदिति न्यायप्राप्ताना-मग्निप्रकाशकत्वसम्भवे तेषा'माग्नेयीषु स्तुवीते'ति वाक्येन बाधः क्रियत इति। स्तोत्राणां सन्निपत्योपकारकत्वपक्षे न तादृशविधिवैयर्थ्यमिति चेत् तस्मा'दृचन्नोहयेदि'ति निषेधविधिना ऋगूहनिषेधेन तत्तद्देवताकस्तोत्राणामग्निप्रकाशकत्वासम्भवेन पूर्वोक्त-विधिरनेन लिङ्गेन वा आग्नेयस्तोत्रस्यैव प्राप्त्या आग्नेयीष्विति विधिवैयर्थ्यस्य दुर्वारत्वात्। स्तोत्राणामारादुपकारकत्वपक्षे तु अनूहितानामेव स्तोत्राणामदृष्टार्थकत्वेन प्राकृतान्यदेवताकस्तोत्राणामपि विकृतावग्निष्टुतौ कार्यसम्भवेन तेषामेव बाधः, 'आग्नेयीषु स्तुवीते'त्यस्य फलमतो न वैयर्थ्यशङ्काऽपि तादृशविधेरिति।

किञ्च स्तोत्राणामदृष्टार्थकत्वे बीजान्तरमप्यस्ति। तथा हि श्रुतौ स्तोत्रशास्त्रा-दिसामान्यसंज्ञा 'आज्यैः स्तुवीत' 'पृष्ठैः स्तुवीत' 'प्रौगैः स्तुवीते'ति नानाविध-विधिवाक्यस्था आज्यपृष्ठप्रौगेति विशेषसंज्ञा। एवं पुराणादौ। साम्बपुराणे 'स्तुवंस्तत्र' त्यनेन स्तव इति सामान्यसंज्ञा, 'स्तवराज इति ख्यात' इति विशेषसंज्ञा। एवं मार्कण्डेयपुराणे 'एभिः स्तवैश्च मां नित्यं स्तोष्यत' इति सामान्यसंज्ञा, 'एतत्ते कथितं राजन् देवीमाहात्म्यमुत्तमम्' इति विशेषसंज्ञा। एवं

१– तालपत्रे पदमिदं नास्ति

'गङ्गाष्टकं पठती'त्यादावप्यूह्यम् । तत्र सर्वत्र संज्ञाद्वयं स्तोत्रादीनामारादुपकारकत्वपक्ष एवोपपद्यते ।

सन्निपत्योपकारतायां संज्ञयोर्वैयर्थ्यापत्तिः । न चेतरव्यावर्तकत्वमेव संज्ञाफलमस्त्विति वाच्यम् गुणगुणिसङ्कीर्तनस्य स्तवत्वेन गुणगुणिसम्बन्धविषयकत्वस्यैव व्यावर्त्तकत्वात् संज्ञाया अनपेक्षणात् । तथा च सामान्यविशेषसंज्ञयोः प्रयोजनान्यथानुपपत्त्या स्तोत्रादौ आरादुपकारकत्वग्राहकत्वमेव तयोः फलमिति सिद्धान्तः ।

ननु संज्ञावच्छिन्नस्य फलजनकत्वपक्षमादृत्य तयोः साफल्यमस्तु तथाहि यथा 'अंशुं गृह्णाति' 'अदाभ्यं गृह्णाति' इत्यादौ अवच्छेदकभेदेऽपि अंशुनामकादाभ्य नामकपात्रग्रहणस्य 'अंशुं गृह्णाम्य' 'दाभ्यंगृह्णामी'त्यादिवाक्यपूर्वकस्यैवादृष्टोत्पाद कत्वम् । यथा श्राद्धादा'विदमन्नमि[1]त्यादेर्वाक्यपूर्वकस्यैवादृष्टोत्पादकत्वम् । तथाऽत्रापि स्तवादिपदेनोक्तस्यैव पठितस्तवस्यादृष्टोत्पादकत्वं स्यादिति चेत् विशेषतः प्रमाणं विना संज्ञावच्छिन्नस्यादृष्टार्थकत्वे महागौरवात् । तस्मात् स्तोत्राणामारादुपकारकत्वमेवेति । तथा च 'एभिः स्तवैश्च मां नित्यं स्तोष्यत' इत्यत्र, स्तवराजे 'पूतात्मा निरुज' इत्यत्र 'गङ्गाष्टकं पठति य' इत्यत्र 'या निरुजे'ति स्त्रीकर्तृकपाठपक्षेऽपि 'सा घण्टा पातु नो भीते'रित्यादौ परोद्देश्यकपाठे वरिति [?] च 'अपवित्रः पवित्रो वे'ति 'यः स्मरेदि'त्यादावपि नोह्यम् । संज्ञावच्छिन्नस्य फलजनकत्वापत्तेः । ऐन्द्रया इव 'पुण्डरीकं स्मरेदि'ति श्रुत्या विनियोगाच्चेति निगर्व इत्यलमधिकेन ।

एवं विशेषविधिं विना जप्यावाहनमन्त्रादौ नोहोऽदृष्टार्थकत्वात् । अत एवैकोद्दिष्टादौ 'देवताभ्यः पितृभ्यश्च[2]' 'पितृनहमावाहयिष्ये' 'आयन्तु नः पितर'[3]इत्यादि मन्त्रेषु नोहः । ननु तत्तदानुपूर्वीविशेषविशिष्टवर्णस्मरणादिकं जपः तस्यानाद्यानुपूर्वीविशेषविशिष्टविषयत्वेनैव अदृष्टार्थकत्वम् । अतो जप्यमन्त्रेऽनूहस्तु युक्त एव । आवाहनादिमन्त्राणां पूर्वोक्तलाघवात् कर्मसमवेतार्थप्रकाशनद्वाराऽदृष्टार्थकत्वेन तेषु

---

१— 'इदमन्नमिमा आपः इदमाज्यमिदं हविरिति' श्राद्धकल्पः ।

२—देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।
नमः स्वाहायै स्वधायै नित्यमेव नमो नमः ॥ इति ।

३—आयन्तु नः पितरः सौम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः इति

कथमनूह इति चेत् अत्राग्निष्वात्तादिपितृगणानामावाहनस्य स्मरणस्य वा जनकत्वेन तयोः सर्वत्राविशेषे अविशेषेणैव तेषां प्रयोगार्हत्वम् न तु पार्वणादौ पित्रादिप्रकाशकत्वम्। येन तद्विकृतावेकोद्दिष्टादौ मात्रादिपद [ स्य ] ऊहः स्यादित्यस्मद्गुरुगोपालभट्टचरणाः।

जरन्मैथिलास्तु आवाहनमन्त्रेणोहोऽदृष्टार्थकत्वात्। ननु श्राद्धे देशसान्निध्ये सति श्राद्धोद्देश्यकदेवानां श्राद्धभोजनसम्पत्तिः। अतस्तदर्थं तदावाहनमेव मन्त्रफलमस्तु तथा सत्यपि आवाहनमन्त्राणां सन्निपत्योपकारकत्वलाघवसम्भवः। तथा च देवताभेदाद् विकृतावूह एवेति चेन्न देवतासान्निध्यस्य देवताधिकरणे मीमांसकैर्निराकृतत्वात्। प्रतिमासंस्कारादिस्थले देवतासान्निध्यं व्यवस्थापयद्भिर्नैयायिकैः कुसुमाञ्जल्यादौ[1] मीमांसकमतसिद्धदेवतासान्निध्याभावस्य समुद्भावितत्वात्। तेन दृष्टार्थकत्वासम्भवेन तदुच्चारणमात्रस्यादृष्टार्थकत्वमत आवाहनादिमन्त्रे अनूह एव।

ननु देवतासान्निध्यफलकावाहनादिसम्पादनद्वारा सन्निपत्योपकारकत्वं माऽस्तु अर्थप्रकाशनद्वारा तथात्वे बाधकाभावः। न च प्रकृतिवद् विकृतावपि प्राकृतार्थप्रकाशनमेव फलमस्तु इति वाच्यम् 'अघोरादि'मन्त्रस्यापि तथात्वापत्तिरिति चेत् पित्रादिस्मारकत्वे तेषामावाहनमन्त्रत्वव्याघातः। न च कर्मसमवेतार्थप्रकाशनविशेष एवावाहनमिति वाच्यम्, तस्याः स्मृतेः तिलविकरणादिना व्यवहितत्वेन त्यागपर्यन्तमनवस्थानात्। 'अघोरा'दिमन्त्रेण तथा एवमन्येष्वपि जप्यावाहनमन्त्रेषु विशेषविधिं विना प्रकृताविव विकृतावनूह एव। किञ्च 'आयन्तु न' इति जपित्वेति ग्रन्थेन कात्यायनेन जप्यत्वेनाभिधानात् 'देवताभ्य' इव अनूह एवेत्यधिकमग्रे वक्ष्यते। एवमेतेषामदृष्टार्थवदावाहनमन्त्रत्वभ्रमेण बाधकल्पनमेकोद्दिष्टादौ तदपि भ्रममूलकमेवेति प्राहुः।

तस्मात् पदस्वरूपोच्चारणस्यापूर्वजनकत्वस्थले जप्यमन्त्रादावप्यनूह एव। मन्त्रघटकपदार्थस्वरूपस्य अपूर्वजनकत्वस्थले तत्पदार्थस्मारकपदस्य विना श्रुत्यादिकमूह एव। श्रुत्यादिस्थले ऐन्द्रया गार्हपत्यमित्यादौ प्राकृतपदस्य लक्षणैवेति सिद्धान्तः। तदेव नवमाध्यायतृतीयापादव्याख्यानावसरे पार्थसारथिमिश्रा व्याचख्युः तथा हि मन्त्राणामूहश्चिन्त्यते।

---

१—देवताः सन्निधानेन प्रत्यभिज्ञानतोऽपि वा। कुसुमाञ्जलिः।१।१२॥

[मन्त्रोहः]

प्रकृतस्थानपतितः पदार्थान्तरकार्यतः ।
ऊहः प्रयोगो विकृते ऊह्यमानतयोदितः ।।इति

पार्थसारथिमिश्राः ।

मध्ये स्यादेकजातीनां कर्मणां यत्र कर्मणि ।
आम्नानं सकलाङ्गानां प्रकृतीति तदुच्यते ।।

सर्वेषामेव व्रतानामेकादशीव्रतं, सर्वेषामेव श्राद्धानां पार्वणं, सर्वेषामेव यागानां ज्योतिष्टोमः, सर्वासामिष्टीनां दर्शपौर्णमासौ, सर्वेषां महादानानां तुलादानं प्रकृतिः सर्वेषां स्नानानां नित्यस्नानं एवं पूजायामपि नित्यपूजा प्रकृतिस्तत्र सकलाङ्गाम्नानात् । अन्यानि विकृतयस्तत्तत्प्रकृतिकतया तेषु तत्तदङ्गकत्वस्याक्षेपादेव सिद्धिरिति मीमांसासिद्धान्तः । अत एव पस्पशाह्निके[1] व्याख्यावसरे शब्दकौस्तुभकर्तारः ऊहोऽपि प्रयोजनम् । तथाहि यत्राङ्गजातं सम्पूर्णमुपदिष्टं सा प्रकृतिः, यथा दर्शपौर्णमासौ। यत्र नोपदिष्टं सा विकृतिः, यथा 'सौर्यं चरुन्निर्वपेद् ब्रह्मवर्चसकामः' इति विहिता सूर्यदेवताकेष्टिः प्रकृतिवद् विकृतिः कर्तव्येति पूर्वमीमांसायाम् । तत्र यस्याङ्गस्य प्रकृतौ य उपकारक्लृप्तः तस्य विकृतावसम्भवे निवृत्तिः । यथा प्रकृताववघातस्य वैतुष्यमुपकारकतया क्लृप्तं तस्य कृष्णले बाधादवघातस्य निवृत्तिः । मन्त्रा अप्यङ्गम्, तेषां चानुष्ठेयार्थप्रकाशनं कार्यम् । तत्र प्रकृतौ यदभिधेयं तच्चेद् विकृतौ साकल्येन नास्ति तदा कृत्स्नस्य मन्त्रस्य निवृत्तिः, यथा 'वरक्षोदिव सपत्नं वध्यास'मित्यवघातमन्त्रस्य कृष्णलेषु, यस्य त्वेकदेशस्याभिधेयं नास्ति तस्य तावन्मात्रं निवर्तते । यथा'ऽग्नये त्वा जुष्टं निर्वपामी'त्यस्यावयवभूतदेवताभिधायिपदमौषधद्रव्यकत्वेन एकदेवताकत्वेन वा आग्नेयविकारभूते सौर्ये वर्तते । अग्निशब्दे च लुप्तद्वारकतया निर्वतमाने एकारो निवर्तते । अकारान्तरेतरप्रकृतिसन्निधानेनैव हि यकारस्य सम्प्रदानत्वं वाच्यम् । अकारान्ता ई य[सूर्य]शब्दस्य ततश्चतुर्थ्यन्त सूर्यायेत्याद्युदात्तमग्नय इत्यस्य मध्योदात्तस्य स्थाने ऊह्यम् । सोऽयं प्रकृत्यूहः । लिङ्गस्य क्वचिदूहः 'देव आज्य शुन्ध

1—व्याकरणमहाभाष्यस्य प्रथमाह्निके ।

मसीति' एवं प्रत्ययस्य क्वचिदूहः इति प्राहुः ।

एवं सर्वेषां व्रतानामेकादशीव्रतप्रकृतिकतया तदीयाङ्गानां तेषु तेषु व्रतेष्वतिदेशः । न चैकादशीव्रतीययावदङ्गकत्वे अन्येषां तदभेदापत्तिरिति वाच्यम् ? कालदेवतादेरेव भेदकत्वात् । शब्दान्तराभ्यासगुणप्रकरणसंख्यानामधेयानां कर्मभेदकत्वस्य **मीमांसासिद्धान्तात्** । तस्मादेकादशीव्रत आम्नातानि यान्यङ्गानि असति बाधके तानि अतिदेशादायान्त्येव व्रतान्तरे । तथाहि, एकादशीव्रते श्रूयते **कालमाधवीये तत्राङ्गिरा**—अथ काम्योपवासक्रमः प्रातः—

गृहीत्वोदम्बरं पात्रं वारिपूर्णमुदङ्मुखः ।
उपवासं तु गृह्णीयादिति ।

सायमाद्यन्तयोरह्नोः सायं प्रातश्च मध्यमे ।
उपवासफलप्रेप्सुर्जह्यादुक्तचतुष्टयम् ।। इति

**विष्णुधर्मोत्तरे**—

असम्भाष्यानसम्भाष्य तुलस्यतसिकादलम् ।
आमलक्याः फलं वाऽपि पारणे प्राश्य शुद्ध्यति ।।

असकृज्जलपानं च दिवास्वापश्च मैथुनम् ।
ताम्बूलचर्वणं मांसं वर्जयेद् व्रतवासरे ।। इति

**वसिष्ठः**—

उपवासे तथा श्राद्धे न खादेद् दन्तधावनम् ।
दन्तानां काष्ठसंयोगो हन्ति सप्त कुलानि च ।। इति

**दन्तधावने प्रायश्चित्तं विष्णुरहस्ये**—

श्राद्धोपवासदिवसे खादित्वा दन्तधावनम् ।
गायत्र्याः शतसम्पूतमम्बु प्राश्य विशुद्ध्यति ।।इति

**हारीतः**—

पतितपाखण्डनास्तिकादिसम्भाषणमनृतादिकमुपवासदिने वर्जयेदिति ।

**कूर्मपुराणे**

बहिर्ग्रामान्त्यजान् सूतिं पतितञ्च रजस्वलाम् ।
न स्पृशेन्नाभिभाषेत नेक्षेत व्रतवासरे ॥ इति

**विष्णुरहस्ये**

स्मृत्यालोकनगन्धादि खादनं परिकीर्तितम् ।
अन्नस्य वर्जयेत्सर्वं ग्रासानाञ्चाभिकाङ्क्षणम् ॥
गात्राभ्यङ्गं शिरोऽभ्यङ्गं ताम्बूलं चानुलेपनम् ।
व्रतस्थो वर्जयेत् सर्वं यच्चान्यत्र निराकृतम् ॥ इति

एवं **श्रीवत्सादयोऽपि**—

अभुक्त्वा प्रातराहारं निवेद्य व्रतमाचरेत् ।

इत्यादिभिराम्नातानि प्रवृत्तिनिवृत्तिरूपाण्यङ्गानि व्रतसामान्य एवातिदेष्टव्यानि प्रकृतिवद् विकृतिरिति न्यायात् । नन्वेतेषामङ्गानां श्रुत्यादिनैव सर्वेषु व्रतेषु विनियोगः सम्भवति किमतिदेशकल्पनया । सर्वत्र व्रतोपवासादिसामान्यवचनश्रवणादिति चेन्न, व्रतोपवासादिपदानामेकादशीतात्पर्यकत्वात् । न चात्र मानाभावः, अधिकाराख्य प्रकरणस्यैव तत्तात्पर्यग्राहकत्वात् । न च तस्य तथा तात्पर्यग्राहकत्वे मानाभावः । अधिकाराख्यप्रकरणस्य तात्पर्यग्राहकताया एव मीमांसासिद्धान्तात् । तथाहि द्विविधं प्रकरणम्, एकमधिकाराख्यम्, अपरमाकाङ्क्षाख्यम् । तत्र, अन्त्यस्य कथम्भावाकाङ्क्षारूपस्याङ्गताग्राहकत्वम् । आद्यस्य तात्पर्यमात्रग्राहकत्वमिति सिद्धान्तः । अस्तु वा तेषां सामान्यपरता, विशेषवचसां का गतिः? तथा हि **कालमाधवीये कूर्मपुराणे**

दशम्यामुपवासस्तु मांसमैथुनवर्जितः ।
एकादशीमुपवसेत् पक्षयोरुभयोरपि ॥
शाकं मांसं मसूरांश्च पुनर्भोजनमैथुने ।
द्यूतमत्यम्बुपानं च दशम्यां वैष्णवस्त्यजेत् ॥ इति

**विष्णुधर्मे**

असम्भाष्यानसम्भाष्य तुलस्यतसिकादलम् ।
आमलक्याः फलं वापि पारणे प्राश्य शुद्ध्यति ॥ इति

**स्मर्यते—**

दशम्यामेकभुग् भूत्वा खादयेद् दन्तधावनम् ।

तदनन्तरं दशम्यां नियमग्रहणं कुर्यात् ।

**ब्रह्मवैवर्ते—**

प्राप्ते हरिदिने सम्यग् विधाय नियमं निशि ।
दशम्यामुपवासस्य प्रकुर्याद् वैष्णवव्रतम् । इति ॥

**नियमो नारदीये स्मर्यते**

अवनीतल्पशयनाः प्रियासङ्गमवर्जिताः । इति ।

तत्प्रातरुत्थाय बाह्याभ्यन्तरशुद्धिं विदध्यादित्यादिभिर्दशम्यादौ मांसादिनिषेधादन्यत्रैकभुक्तादिवा वादा [ दिवास्वप्नाद्यः? ] वतिदेशेनैव तेषां प्राप्तिः । न चैकादशीव्रत एवैतानि प्रवृत्तिनिवृत्तिरूपाण्यङ्गानि सन्तु श्रुत्यादिबलादिति वाच्यम् । प्रकृतिवदिति न्यायेन अङ्गाङ्गिभावग्रहानङ्गीकारे सर्वत्र तथापत्तेः । एवं मन्त्राणामपि बोध्यम् । तस्माद् यत्र प्रकृतिवदिति न्यायात् मन्त्राणां प्राप्तिः कर्मासमवेतार्थत्वञ्च तत्र समवेतार्थप्रकाशनायावश्यमूहः । नन्वेवं कृष्णाष्टमीव्रतादावुपदेशेन प्राप्ते 'सोऽहं दैवातिदुर्वृत्ता' इति मन्त्रे स्त्रीकर्तृकपाठे सेत्यधिकारिवाचकपदोहो न स्यात् । तस्यातिदेशादप्राप्तेरिति चेत् सत्यम्, न भवत्येव । अतिदेशस्यैव तन्नियामकत्वात् ।

**अत्र श्राद्धचिन्तामणिव्याख्यावसरे वामदेवोपाध्यायाः** मन्त्रा औरसपुत्रिकापुत्रक्षेत्रजपौनर्भवैः पार्वणे यथा श्रुताः विकृतौ वचनप्रकृत्योरूहेन पठनीयाः, शास्त्रानुमतपितृत्वस्य तत्र सत्त्वात् । दत्तक्रीतकृत्रिमादिभिः मत्प्रतिग्रहीतृमत्क्रेतृमत्पुत्रत्वकरेति पदोहः कार्यः ।

इदमत्राकूतम्, उपकारं पुरस्कृत्य पदार्थो विकृतावतिदिश्यते प्राकृत इति । प्रकृतावर्थबोधरूप उपकारो विकृतावपि । तत्र स एवेत्यसमवेतार्थको विकृतौ प्रकृतौ समवेतार्थक ऊह्यते मन्त्रः ।

यत्र च न प्रकृतिविकृतिभावस्तत्र सम्भवत्यर्थसाधुत्वे शब्दसाधुत्वं न कल्प्यते इति दृष्टद्वारसम्भवे नादृष्टं द्वारमिति कल्प्यते ऊहः । अत एवैकब्राह्मणनिमन्त्रणे

चकवचनान्तमन्त्रो निबन्धिभिरभिहितः। अत एव च मातृश्राद्धीयछागप्रोक्षणे 'मात्रेति' मन्त्रं प्रयुञ्जते शिष्टाः। गच्छामि दिव्यलोकत्वमित्यत्र च नोहः। अस्मत्पदस्यात्मन्येव शक्तेः। अत एव 'सोऽहं दैवातिदुर्वृत्त' इत्यत्र नोह इति प्राहुः।

अत्रेदं बोध्यम्। अस्मदादिपदस्यात्मत्वविशिष्टवाचकत्वेन स्त्रीकर्तृके तन्मन्त्रपाठे अस्य मन्त्रस्य कर्मसमवेतार्थकत्वेऽपि तत्पदस्य पुंस्त्वविशिष्टबुद्धिविषयकत्वेन कर्मासमवेतार्थकत्वात् सेति पदोहस्यावश्यकत्वमेव। न च लिङ्गमविवक्षितम्, तथा सति लिङ्गोह एवोच्छिद्येत। इष्टापत्तौ 'देव आज्यं शुध्यती' त्यत्रापि ऊहानापत्तेः। तस्मादतिदेशाप्राप्तत्वादेव 'सोऽहं दैवातिदुर्वृत्त' इत्यादौ स्त्रीकर्तृकपाठेऽपि अधिकारिवाचि सेति पदं नोह्यमिति सिद्धम्। अधिकारिप्रकाशस्तु ऐन्द्रयादिवल्लक्षणयाऽपीति निगर्वः।]

ननु प्रकृतावेकपशौ श्रुतस्य छागस्य 'वपया मेदसो नुनक्ती'ति मन्त्रस्य विकृतौ प्राजापत्ये सप्तदशपशौ छागानामिति बहुवचनस्य ऊहो यथा, तथा 'एतद्व'[१] इति मन्त्र एकोद्दिष्टादौ कथमूहः? प्रकृतौ कर्मासमवेतार्थत्वात्। बहुत्वविशिष्टपितृणां प्रत्येकं कर्मासमवेतत्त्वात्। पाशाधिकरणविरोधाच्च। तथाहि दैक्ष्ये पशावेकपाशिकायां रज्जौ प्रकृतौ 'स्वधितिः पाशं प्रमोक्तु' 'स्वधितिः पाशान् प्रमोक्तु' इति मन्त्रद्वयेऽपि द्विपाशिकायां विकृतौ प्रयुज्यमाने एकवचनान्तस्य प्रथममन्त्रस्य ऊह एव, प्रकृतौ समवेतार्थत्वात्। न द्वितीयमन्त्रस्य ऊहः, प्रकृतावसमवेतार्थत्वात्। तथा च प्रकृतावसमवेतार्थस्य 'एतद्व'[१] इति मन्त्रस्य विकृतावेकोद्दिष्टादावूहे पाशाधिकरणविरोधस्य दुर्वारत्वमिति चेत् अत्र देवनाथठक्कुराः 'एतद्व' इति मन्त्रस्य 'इति जल्पन् पृथक् पृथगि'ति वीप्सावलेन पार्वणपरत्वे तत्र समवेतार्थत्वेन बहुवचनस्य प्रयोगसाधुत्वार्थकत्वमात्रम्, न तु एकोद्दिष्टादौ तन्मन्त्रस्य प्रवृत्तिः। वीप्सावाक्येन तत्रोपदेशस्यासम्भवात्। वीप्सावाक्यार्थस्य तत्र बाधात्। एवं पार्वणादावुपदेशेन प्राप्तस्यातिदेशेन एकोद्दिष्टादौ प्राप्तौ लाघवात् कर्मसमवेतार्थप्रकाशकत्वेनैकत्वविशिष्टपित्रादेः प्रकाशनाय युक्त एवोहः। न च प्रकृताविव विभक्तेर्वैयर्थ्यमस्तु, तत्कल्पनायां बीजाभावात्। ननु 'शुन्धन्तां पितरः' 'शुन्धन्तां पितामहाः'

---

१—एतद्वः पितरो वासः इति।

'शुन्धन्तां पितामहा' इत्यादावेकोद्दिष्टेऽपि यथा साधुत्वार्थं बहुवचनस्य पाठः, तथा प्रकृतेऽप्यस्तु इति चेत् ? यत्र स्वभावादेव प्रकृतौ बहुवचनस्य साधुत्वं तत्र विकृतावपि तथैव पाठः। प्रकृते तु न तथा पृथगिति निर्देशात् । तथा च पृथगिति निर्देशात् पृथक् पृथक् पाठः। पृथक् पृथक् पाठे नैरर्थ्यकं बहुवचनस्य युक्तम्, दृष्टादृष्टार्थकल्पनयोः लाघवगौरवयोः सर्वत्र तुल्यत्वादिति प्राहुः।

न'न्वेतद्व' इति मन्त्रस्य पित्रादिसपिण्डीकरणश्राद्धे प्रेतदिशीव त्रिकेऽपि ऊहः कुतो न क्रियते। न च पार्वणेऽपि तदापत्तिः, तत्र प्रकृतिवदिति न्यायेन तस्याप्राप्तेः। सपिण्डीकरणे तु न तथा, तस्य विकृतित्वात्। अन्यथैकोद्दिष्टेऽपि तथा न स्यात्। तस्यापि विकृतित्वात्। न'न्वेतद्व' इति मन्त्रस्य प्रकृतावसमवेतार्थत्वेनैकोद्दिष्टेऽप्यनूह इष्ट एवेति चेन्न, तत्र तस्य समवेतार्थत्वस्योपपादितत्वात्। एकवन्मन्त्रानूहेतैकोद्दिष्ट इति विशिष्यैव वचनोहविधानाच्च। विकृतावसमवेतार्थे दृष्टार्थे बहुवचनपदघटित-प्रकृतमन्त्र एकवचनमूह्यमित्येव परं ज्ञेयम्। वैकृतविशेषोपदेशात् प्राकृतबाधः शरमया-स्तरणविशेषोपदेशात् बर्हिर्बाध इव। तथा च यथा सामान्यतः प्राप्तस्य बर्हिषो विशेषो-पदेशतः शरैर्बाधः तथा सामान्यतः प्राप्तस्य बहुवचनस्यापि कर्मसमवेतार्थकत्वकल्पना-लाघवेन विशेषतः प्राप्तैकवचनेनैकोद्दिष्टे बाधः।

केचित्तु यत्रार्थपर्यालोचनमात्रादेवासमवेतार्थता तत्र नोहः यथाऽऽवाहनमन्त्रादौ। यत्र तु वचनान्तरबलादसमवेतार्थताप्रसक्तिः, यथा 'इति जल्पन् पृथक् पृथगि'ति वचना-दसमवेतार्थता पार्वणादौ, प्रकृतमन्त्रस्य तत्रानूहे नियमाभावः। तथा च पार्वणादौ प्रापकवचनानुरोधेन विभक्तेः साधुत्वार्थकता एकोद्दिष्टादौ चातिदेशेन प्राप्तस्य सम-वेतार्थत्वलाघवेन ऊह एव, अन्यत्र तु न तथा। तथा च सपिण्डीकरणेऽर्थपर्यालोक[च]-नस्याभावादूह इति भाव इत्याहुः।

अथ पाशाधिकरणे सर्वेषां यागानां दैक्ष्यपशुयागः प्रकृतिभूतः, दैक्ष्ये च पशौ तदुन्मोचने विकल्पेन मन्त्रद्वयं प्राप्तमस्ति तत्र'दितिः पाशं प्रमोक्तु' इत्येको मन्त्रः 'अदितिः पाशान् प्रमोक्तु' इति द्वितीयो मन्त्रः। प्रकृतिवद् विकृतिन्यायाद् द्विपाशि-कायां तयोः प्राप्तौ प्रकृतौ कर्मसमवेतार्थत्वेनैकवचनान्तस्य द्विवचनान्तत्वेन ऊह एव प्रकृतावसमवेतार्थत्वेनानूह एव यथा तथा सपिण्डने 'एतद्व' इति मन्त्रे पितृपदस्य समवेतार्थत्वमेव बहुवचनस्य साधुत्वमात्रार्थकत्वम्। तथा च विकृतावूहे बाधकाभाव

इति तदपि न। पाशाधिकरणे 'पाशान् प्रमोक्तु' इत्यादावपि पाशपदस्य समवेतार्थ-कत्वेन बहुवचनस्य साधुत्वार्थकत्वेन च विकृतावूहस्य दुर्वारत्वापत्तेरिति चेत् अत्र वाचस्पतिमिश्राः—'अग्ने [ ग्नये ] त्वा जुष्टं निर्वपामीत्यत्र' 'सूर्याय त्वा जुष्टं निर्वपामी'ति नवमेऽध्याये सिद्धान्तितम्। तथा च 'नमस्ते माता रसाय' 'नमस्ते पिता रसाये'त्यादि सिद्धान्तितम्। अत्र दैक्ष्ये पशावेकपाशिकायां रज्जौ प्रकृतौ 'स्वधितिः पाशं प्रमोक्तु' स्वधितिः पाशान् प्रमोक्तु' इति मन्त्रद्वयेऽपि [द्वि] पाशिकायां विकृतावेकवचनान्ते द्विवचनान्तः क्रियते, प्रकृतौ समवेतार्थत्वात्। बहुवचनान्तस्तु नोह्यते, प्रकृतावेवासमवेतार्थत्वात्। 'एतद्वः पितरो वासः' 'इति जल्पन् पृथक् पृथगि'त्यादिबहुवचनान्तेन तद्बोधकेन स्फुटमेव प्रकृतौ न समवेतार्थस्य सिद्धिरिति। न च न्यायलभ्यो नायमूहः, किन्तु 'एकवचनवन्मन्त्रानूहेते'ति वचनबलात्। तथा च तस्य देवेति वाच्यम्। तथा सति 'आयन्तु न. पितर' इत्यादावप्यूहापत्तेः। 'एतद्व' इत्यादिवचनं नोह्यम्, किन्तु प्रकृतिमात्रमित्याहुः। एच्च पाशाधिकरणविकृतावनूहे एकोद्दिष्टादावपि तथापत्त्या न सम्यक् प्रतिभाति। यदि तु 'पृथगि'ति श्रवणान्नानो-द्दे श्यक श्राद्धविषयकमेवैतस्य न तु पार्वणमात्रविषयकत्वं तदोपदेशादेव प्राप्तस्यास्य मन्त्रस्य ऐन्द्रया इवानूह एवेति बोध्यम्।

वस्तुतस्तु अत्रायमाशयो मिश्राणाम्— 'एतद्व'इति मन्त्रस्य प्रकृतावसमवेतार्थ-त्वेन विकृतौ सपिण्डनादौ नोहः, पाशाधिकरणविरोधात् एकोद्दिष्टादावेकवचन-वन्मन्त्रानूहेदिति विष्णुसूत्रादूह इति दिक्। वस्तुतस्तु पितृपदेनैव पितामहादि प्रकाशनात् सपिण्डनादौ पितामहदिश्चनूहस्य युक्तत्वम्। न च पितृपदस्य पितामहा-द्यवाचकत्वेन शक्त्या तदप्रकाशकत्वात्। लक्षणया प्रकाशे स्वायत्ते शब्दप्रयोग इति न्यायविरोध इति वाच्यम्। तस्य जनकजनकसाधारणत्वम् पुंस्त्वावच्छिन्नवाचक-त्वात्। अत एव पार्वणादौ पितामहादिपदोहो न युक्तः, पितृपदेनैव तत्प्रकाशनात्। तथा च प्रकृतिवत्प्रकाशनसम्भवे पदान्तरमवाचकं न प्रयोज्यमिति भावः। अत्र श्री दत्तोपाध्यायाः वस्तुतस्तु पितृपदं जनकादित्वेन रूपेण पितामहादौ मुख्यमुक्तं श्राद्धकल्पे अतो वाचकतैवेति प्राहुः।

ननु पितामह्यादिभिः सह मातृसपिण्डने पितामह्यादिप्रकाशनाय 'नमो व'

इत्यादिषु मन्त्रेषु मातृपदं पितामह्यादिपदं वोह्यम् इति संशये ननु पितामह्यादिपदमेवोह्यम्, मातृपदस्य शक्त्या तत्प्रकाशकत्वासम्भवात्। लक्षणया तत्प्रकाशकत्वे आग्नेयपदे तथापत्तेः। स्वायत्ते शब्दप्रयोगे किमित्यवाचकं प्रोक्षामहे इति न्यायस्य विलयापत्तेश्च। न च पार्वणादौ पितृपदवदत्र मातृपदेनैव तासां प्रकाशनं भवति प्रकृतौ पार्वणादौ आम्नानान्यथानुपपत्त्यादेरेव बीजत्वात्।इह तु न तथेति चेदत्र मातृशब्देनैव तासां प्रकाश्यत्वम्। न च पितामह्यादेः कथं मातृपदेन प्रकाशनमिति वाच्यम्, मातृपदस्य जनकस्त्रीमात्रशक्तत्वात्। न च तासु शक्तिग्राहकाभावः,

पित्रादित्रयपत्नीस्तु भोज्या मातॄः प्रति द्विजाः।
स्त्रीणामेव तद् यस्माद् मातृश्राद्धमतः स्मृतम्॥

इति शङ्खवचनात्। द्विजाः इत्यन्वयः।

ननु पित्रादित्रयपत्नीनां कथं मातृपदेन प्रकाशनमिति चेत् न, मातॄरिति निर्देशात् सामान्यरूपेणैव तत्प्रकाशनसम्भवात्। ननु सपत्नीमातुरपि तावन्मध्य पतितत्वात् तस्या अपि प्रकाशनं मातृपदेनास्त्विति चेत् अत्र।

तिस्रोऽपि मातरः पूर्वं पूजनीयाः प्रयत्नतः।

इति शातातपवचनेन मातृप्रदप्रयोगस्य मातृपितामहीप्रपितामहीषु स्वारसिकत्वादिति जरन्मैथिलाः। तस्या अपि पितामह्यादिभिः सह मातृसपिण्डने सामान्यरूपेण प्रकाशकानां 'नमो व' इति 'ऊर्ज्जं वहन्ती'रिति 'पित्रे स्थानमसी' त्यादि मन्त्राणां बहुवचनान्तमातृपितृपदघटितानामेव प्रयोगः कार्यः। सामान्यरूपेण निर्देशादिति सिद्धान्तः।

केचित्तु स्वायत्तत्वन्यायमूलकत्वेन पितामहीप्रपितामहीतिप्रयोग एव साधुवृद्धप्रपितामहीप्रकाशनाय विशिष्य प्रयोगस्यावश्यकत्वादित्याहुः, तन्न। एकपदेनैव प्रकाशनसम्भवे पदान्तरावृत्त्ययोगात्। न 'चैतद्व' इति मन्त्रादावपि पितामहादावपि पृथक् पितृपदप्रयोगो न स्यात्। तत्रावृत्तेर्विशेषविधिप्राप्ताया आवश्यकत्वात्। एतेन 'शुन्धन्तां पितरः' 'शुन्धन्तां पितामहाः' 'शुन्धन्तां प्रपितामहाः' इत्यादि स्थल इव 'एतद्व' इत्यादिषु भेदेनोपदिष्टेषु समवेतार्थप्रकाशकमन्त्रेषु पितृसपिण्डनादौ पितामहपदोहः, पार्वणादौ मातामहपदोहः स्यादिति निरस्तम्। जनकजनकसाधारणपुंस्त्वादेः पितृपदशक्यतावच्छेदकत्वेन 'नमो व' इति 'एतद्व' इति

मन्त्रादौ पितृपदेनैव पितामहमाता[ प्रपिता ]महादीनां प्रकाशसम्भवे सपिण्डन-पार्वणादावनूह एवेति सिद्धान्तिनां जरन्मैथिलानामाशय इति दिक् ।

अतिजरन्मैथिलास्तु पात्रन्युब्जीकरणपिण्डसूत्रदानादा'वूर्जं वहन्ती'रिति मन्त्रेषु मातामहादिपदस्य ऊहं मन्यन्ते, पृथक् पाठस्यावश्यकत्वादिति । तच्च श्रीदत्त लिखितविरोधादनुपादेयम् । ननु 'पितॄनहमावाहयिष्य' इत्याद्यावाहनमन्त्रेष्वे-कोद्दिष्टादौ कथं नोहः । आग्नेयादिमन्त्र इव दृष्टार्थकत्वसम्भवात् । न च तत्र दृष्टद्वाराभावः, पात्रप्रश्नरूपस्य ( पितृसन्निधानरूपावाहनस्य ) दृष्टद्वारत्वसंभवात् इति चेन्न, अपत्राके तत्प्रयोगस्यादृष्टार्थकत्वस्यैव सम्भवात् । यथावाहनमन्त्रादौ फलस्यावाहनस्य वाधः । तथाऽपात्रकप्रष्टव्यस्य । नन्वावाहन-मन्त्रादौ कथमावाहनस्य बाधः परसन्निधापनानुकूलशब्दोच्चारणस्यैव आवाहन-पदार्थत्वात् । न चानयनीयप्रकाशने तत्सन्निधापनं सम्भवति चैत्रागच्छेत्यनेन वाक्येन मैत्रसन्निधापनाभावादिति चेत् आवाहनं देवतासान्निध्यम्, तच्च द्विविधम्, शारीरं वौद्धश्च । तयोर्देवताधिकरणे निरस्तत्वात् । मन्त्रार्थवादादिभिः विग्रहादिकं देवतानां प्रतीयते, तद् यथा इन्द्रः सहस्राक्षः गोत्रभिद्वज्रवाहुः तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयतीत्यादि नानार्थवादवाक्यैरैश्वर्यफलदातृत्वहविर्भोजित्व-फलदातृत्वादिनानाविधधर्मनिर्देशाद् विग्रह आयाति देवानां यद्यपि तथाप्यर्थवादानां स्वतः प्रामाण्यासम्भवान्न शरीरसाधकत्वम् । अपूर्वार्थे तात्पर्यग्राहकाभावात् तात्पर्याविषये प्रतीयमाने प्रामाण्यायोगात् । न 'चेन्द्राय स्वाहे' त्यत्र सम्प्रदानचतुर्थी बलात् चैतन्यमायाति देवतानामिति वाच्यम्, तन्मते तेषां स्वीकारबाधात् । तस्यास्त्यागोद्देश्यतामात्रे लाक्षणिकत्वात् अधिकं देवताधिकरणे । तस्मात् प्रमाणा-भावात् न देवतायाश्चैतन्यमतो न शारीरं बौद्धं वा देवतासन्निधानं मीमांसकमत-सिद्धम् । अतो नावाहनं सम्भवति, तस्मादावाहनरूपदृष्टद्वारबाधादावाहनमन्त्राणा-मदृष्टार्थत्वमेवेति सिद्धान्तः ।

अत्र सदानन्दठक्कुरास्तु देवताचैतन्याभ्युपगन्तृनैयायिकमतेऽप्यावाहनमन्त्रे-ष्वनूह एव । न च देवतासान्निध्यरूपद्वारसम्भवेऽदृष्टद्वारकत्वे गौरवमिति वाच्यम्,

मन्त्राणां दृष्टद्वारकत्वसम्भवेऽपि पित्रादीनां मुक्तत्वादिसन्देहाद् द्वारसन्देहे नोहादेर्बाध इत्यपूर्वां युक्तिमुद्भावयन्ति स्म। सा च तत्र मुक्तत्वादिसन्देहेन द्वारबाधेन ऊहबाधस्य सम्भवेऽपि 'गङ्गे च यमुने चैव गोदावरी'त्याद्यावाहनमन्त्रेषु गङ्गास्नानादौ प्रयुक्तेषु गङ्गापदेन विभज्य विनियोगाविनियोगयोरन्यतरानिर्णायकत्वेन न साध्वीति प्रतिभाति।

ननु वाक्यस्यार्थपरत्वस्यावश्यकत्वे तद्द्वारैव कुतो नादृष्टार्थकत्वमिति चेत् तथा सति विकृतावपि प्राकृतार्थप्रकाशस्यैव द्वारत्वमस्तु किमर्थमूहः प्राकृतवत्प्रकाशनेति न्यायात्। न चोद्देश्यज्ञानमेव प्रकृतोपयोगि इति युक्त एव ऊह इति वाच्यम् प्रकाशमात्रानुपयोगस्यात्र वक्ष्यमाणत्वात्। अथ सन्निपत्योपकारकत्वलाघवात् अर्थप्रकाशकत्वमेव आवाहनमन्त्रस्यास्तु। न चैवमप्यारादुपकारकत्वं किमर्थम्? न वयमावाहनमन्त्राणां दृष्टद्वारनिष्पत्त्यर्थं स्मृतिरपेक्षणीयेति ब्रूमः। किन्तु तेन साक्षादेवादृष्टरूपोपकारं जनयताऽर्थवशसम्पन्नपदार्थस्मृतिरपि जननीयैव। तथा च सैव दृष्टद्वारमावाहनानुष्ठापकमस्तु आश्रयिन्यायात्। तथा हि 'स्वाहाकारं जुहोति' इत्यनेन स्वाहाकारस्य दर्शपौर्णमासोपकारकत्वम् मन्त्राङ्गावच्छेदेन दर्शपौर्णमासदेवताप्रकाशनद्वारा तद्देवतासंस्कारकत्वमुपस्थितत्वात् प्रधानापेक्षितत्वाच्च आश्रयित्वम्। यतस्तमाश्रित्य प्रधानदेवतासंस्कारकर्मकरणरूपोपकारसिद्धिरतः आश्रयीति। तथा च प्रकृतेऽप्यावाहनमन्त्रस्यादृष्टार्थकत्वेऽपि कर्मसमवेतार्थप्रकाशकत्वे बाधकाभावः। तथा च यस्मिन् कर्मणि या देवता तत्र तत्प्रकाशनार्थमूहस्यावश्यकत्वमिति चेत् मैवम्। अदृष्टार्थविनियुक्तमन्त्रेण नान्तरीयकविधया जनितायाः पित्रादिस्मृतेः प्रासङ्गिकत्वम्। न हि प्रासङ्गिकं वस्तु अनुष्ठानप्रयोजकम् वाजिनवत्, किन्तु प्रसङ्गादेव वाजिसम्पत्तिः तथाऽदृष्टार्थमनुष्ठीयमान आवाहनमन्त्रप्रयोगे प्रासङ्गिक्येव पित्रादिस्मृतिः। न तदर्थं प्रयोगानुष्ठानम्। तथा च प्रासङ्गिकप्रयोजनानुरोधेन विकृतावूहरूपप्राकृतानुष्ठानवैसादृश्यसम्पादकत्वे पित्रादिस्मृतेरद्वारत्वे किमर्थं साऽपेक्षणीया किमर्थं वा तदर्थमूह इति। अथावाहनमन्त्रस्य दृष्टद्वारकत्वमेव समवेतार्थप्रकाशनमेव व्यापारः। तथैव मन्त्राधिकरणे सिद्धान्तात्। तथा हि—

लभ्यमाने फले दृष्टे नादृष्टपरिकल्पनम्।
लभ्यतेऽर्थस्मृतिर्दृष्टा मन्त्रोच्चारणतस्त्विह॥

अर्थस्मृतप्रयोगप्रयोगाच्च फलोदय इति दृष्टार्थसम्पत्तौ नादृष्टमिह कल्प्यत इत्यादिमीमांसासिद्धान्तस्वरसात् पित्रादिस्मृत्यर्थमावाहनमन्त्र इति चेन्न तेषामावाहनमन्त्रत्वानुपपत्तेरावाहनार्थं मन्त्रावाहनमन्त्र इति यौगिकसमाख्ययाऽन्यत्र विनियुक्तानां तेषामन्यविनियोगे समाख्याविरोधापत्तेः।

ननु मन्त्राणामावाहनार्थत्वे स्मृत्यर्थकत्वमावश्यकमेव। तथा च स्मृतिविशेष एवावाहनमतोऽदृष्टार्थकत्वमेवैतेषामिति चेन्न। आवाहनमन्त्रजायाः स्मृतेर्निरर्थकत्वस्यानुपदमेव वक्ष्यमाणत्वात्। यद्यपि स्मृतेरावाहनपदार्थत्वे आवाहनविधायकेनापि वाक्येन पित्रादिस्मृतिरेव विधीयते तस्यारादुपकारकत्वं सन्निपत्योपकारकत्वं वाऽस्तु इत्यत्र नाग्रहो मम तथाऽपि आवाहनमन्त्रोच्चारणमेवादृष्टसम्पादकम् न तु तन्मन्त्रजा स्मृतिरिति। न चैव'मुशन्तस्त्वे'त्यनेनावाह्येति कात्यायनबोधितं तृतीयया आवाहनकरणत्वं मन्त्रस्य विरुध्येत् आवाहनमन्त्रस्यादृष्टार्थत्वे मन्त्रोच्चारणस्यैवावाहनपदार्थत्वे तस्य तत्करणत्वापत्तेरिति वाच्यम् धान्येन धनीतिवदुपपत्तेः। न च त्यागाङ्गमेव तु मन्त्रजा स्मृतिरस्त्विति वाच्यम् तादृशस्मृतेस्त्यागपर्यन्तं तिलविकरणादिना व्यवधानादनवस्थानात्। न च व्यवहिताऽपि स्मृतिरङ्गम् युक्त्यधिकरणविरोधात्। तथा हि सोमयागे श्रूयते 'पशुवद्दैक्ष्यस्सवनीयोऽनुवन्ध्यः'। तत्र दैक्ष्यपशौ षड्विंशतिरङ्घ्रयः रङ्घ्रिः पाशग्रन्थिः तत्र यद्यपि रङ्घ्रिमन्ता[न्त्र]पशुनयनकाल एव श्रुताः तथापि लिङ्गे रङ्घ्युर्द्धरण एव तस्य विनियुक्तत्वात् उद्धरणकाल एव विनियोगः न पशुनयनकाले तत्प्रयोगेऽदृष्टार्थतापत्तेः। न हि पशुनयनकालिकमन्त्रजा स्मृतिरुद्धरणे साक्षादुपयुज्यते। विजातीयबहुव्यापारव्यवहितत्वाददृष्टार्थतापत्तिभियारङ्घ्युर्द्धरणाव्यवहितकालत्वमेवापेक्षितमतस्तदुद्धरणकाल एव तस्य मन्त्रस्य विनियोग इति सिद्धान्तः। तथा प्रकृते मन्त्रजा स्मृतिस्तिलविकरणादिव्यवहिता न त्यागाङ्गमिति निगर्वः।

तस्मादनर्थपरमन्त्रस्थले सर्वत्रानूह एव। अतएव श्राद्धचिन्तामणौ वाचस्पतिमिश्राः —

तिलोपचारं कृत्वा तु विप्रस्य नियतात्मना।<br>
नामगोत्रमुदाहृत्य प्रेताय तदनन्तरं।<br>
शीघ्रमावाहयेद्भूमिं दर्भहस्तोऽथ भूतले।

मन्त्रस्तु—

इहलोकम्परित्यज्य गतोऽसि परमांगतिम्

इत्यस्यादृष्टार्थकत्वात् स्त्रीश्राद्धेऽप्यविकृत एव पठनीय इति प्राहुः।

तत्र जप्यमन्त्रस्यार्थपरत्वाभावान्नोहः। यद्यपि धातुशक्त्या जपपदाद्व्यक्ति-वचनमात्रं प्रतीयते तथापि रूढ्या सङ्कोचः। अतएव चन्द्रः यद्यपि व्यक्तवचनमात्रे धातुः तथापि जपशब्दो अविवक्षिता र्थकवचनमात्रे व्युत्पन्नः, तत्रैव प्रयोगादिति दिक्।

अतएव श्राद्धचिन्तामणौ वाचस्पतिमिश्राः—तदयं संक्षेपः षट्पुरुषश्राद्धे पितृपदवन्तो मन्त्रा नोहनीयाः, तन्त्रत एव षट्प्रकाशनात्। एवं 'शन्नोदेवी'ति 'तिलोसी'ति 'यवोसी'ति मन्त्रा नोहनीयास्तं [तान्] विनैव प्रकाश्यप्रकाशनात्। 'देवताभ्यः' 'आगच्छन्तु' इत्यादयो जप्यमन्त्राः कुत्रापि श्राद्धे नोहनीया अदृष्टार्थत्वात् अतएवावाहनमन्त्रा नोहनीया अदृष्टार्थकत्वात्। न च पित्रादिसन्निधिफलकत्वादूहोऽस्तु देवतानां सन्निधापने देवताधिकरणविरोधात्। बहुवचनान्तपितृपदवन्तो मन्त्रा य एकोद्दिष्टे विनियुज्यन्ते, ते चोद्देश्यवाचिनैकवच-नान्तपदेनोहनीयाः, एक वचनवन् [मन्त्रा] नूहतैकोद्दिष्ट इति वचनात्। अतएवा-'ग्नयेत्वाजुष्टन्निर्वपामी'त्यादौ 'सूर्याय त्वा जुष्टन्निर्वपामी'ति नवमाध्याये सिद्धान्ति-तम्। तथा च 'नमस्ते माता रसाय' 'नमते पितारसाये'त्यादि सिद्धान्तितम्। तत्र दैक्ष्य पशावेकपाशिकायां रज्जौ प्रकृतौ 'स्वधितिः पाशं प्रमोक्तु' 'स्वधितिः पाशान् प्रमोक्तु' इ[illegible] मन्त्रद्वये द्विपाशिकायां विकृ[illegible]ावेकवचनान्तस्य द्विवचनान्तत्वेनोहः। प्रकृति समवेतार्थत्वात् न द्विवचनान्तस्य यथा तथा 'एतद्व' इत्यादिना प्रतिपुरुषं बहुवचनान्तेन तद्बोधकेन स्फुटमेव प्रकृतौ न समवेतार्थसिद्धिरिति। न च न्यायलभ्यो नायमूहः, किन्तु एकवचनवन्मन्त्रानूहेतेतिवचनलभ्यस्तथा चात्र स्यादेवेति वाच्यं तथा स'त्यायन्तु नः पितर' इत्यादावपि ऊहापत्तेः। 'एतद्व' इति नोह्यम्, किन्तु प्रकृतमात्रम्। 'नमो वः पितर' इत्यादौ मात्राद्येकोद्दिष्टे द्वयमप्यूह्यमिति श्राद्धविवेकस्वरसः। अन्वष्टकादौ मातृपदोहः। यद्यपि जनकत्वे सति स्त्रीत्वं मातृपदप्रवृत्तिनिमित्तं तच्च न पितामह्यादीनां तासामन्यथा सिद्धत्वेनाजनकत्वात् तथापि 'पित्रादि त्रयपत्नीस्तु भोज्या मातृरि'त्यादि शङ्ख'वचनेन स्वमातृपितृमातृपितामहमातृणां मातृत्वस्य स्मारितत्वात् इति प्राहुः।

ननु 'पित्रेत्वा जुष्टम्प्रोक्षामी'त्यत्र पित्रादिपदं कर्म्मसमवेतवचनं न वेति संशय इति चेत् ? अत्र जुष्टमिति भूतकालनिर्देशेऽपि कर्मसमवेतवचनत्वमेव । अत एव पार्थसारथिमिश्राः 'अग्नये त्वा जुष्टं निर्वपामी'त्यत्राग्निशब्दोऽपि किमसमवेतवचनेनोहितव्य उत समवेतवचनेन ऊहितव्य इति । अग्निशब्दो न समवेताभिप्रायकः, जुष्टमिति भूतकालनिर्देशात् । अग्निना तत्सेवितं तदुच्यते । न च निर्वापवेलायामग्निना सेवितं द्रव्यं तस्माज्जुष्टशब्दस्तावदसमवेतवचनः तद्विशेषणं चाग्निपदं स्वरूपतोऽसमवेतवचनं सवित्रादिपदवत् प्रशंसार्थमित्यनूह । उच्यते—

नात्र जुष्टस्य निर्वापो मन्त्रेणानेन कथ्यते ।
निर्वापकरणी त्वत्र कीर्त्यते जुष्टभावना ॥

यज्जुष्टं तस्य निर्वापं करोमीति नार्थः । किन्तु निर्वापेनाग्नये जुष्टं करोमि इति यथा जुष्टं भवति तथा करोमीत्यर्थः । तस्मात् समवेतवचनत्वात् अग्निशब्दस्य ऊह इति प्राहुः । 'मां तोलयन्ती'त्यादौ नोहः विषयभेदे अधिकारिभेदे वा प्रकृतिविकृतिभावाभावात् । अत एव दिव्यतत्त्वे रघुनन्दनभट्टाचार्याः—

त्वमेव घट जानीषे न विदुर्यानि मानवाः ।
व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति ॥
तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हति ।

इत्यादौ स्त्रीपरीक्षायामप्यविकृतः पठनीयो मन्त्रः । 'दिव्यानीह विशुद्धय' इत्यनेन सन्देहनिवृत्तिफलकतयाऽविशेषेण स्त्रीपुंकर्तृकदिव्यविधानेन 'मानुषः शुद्धिमिच्छती'त्यनेन प्रकृतावूहायोगात् । अत एव 'पत्नीसक्ताज्यं नो धेही'ति मन्त्रे बहुपत्नीकयजमानकर्तृकप्रयोगेऽपि न द्विवचनबहुवचनावूहेत इत्युक्तम् इति प्राहुः वाचस्पतिमिश्राः ।

शतधन्वन्तरञ्चैव तावत् पुष्करिणी शुभा ।
एतत्पञ्चगुणप्रोक्तः तलाग—इति वसिष्ठसंहिता ।

'पुष्करिण्यां तलागे निवसन्तु मे' इति मन्त्रः पुष्करिणीपदेनोह्येत समवेतार्थत्वादिति चेन्न । युगपद्विधौ प्रकृतिविकृतिभावाभावेन ऊहासम्भवात् । तलागपदं तु अजहत्स्वार्थलक्षणया खातपरमिति प्राहुः इत्यलमप्रकृतविचारेणेति ।

ननु श्रुतिं विना नित्यकर्मणि विनियुक्तो मन्त्रः काम्यकर्मणि, काम्यकर्मणि विनियुक्तो नित्यकर्मणि विनियुज्यताम् विनिगमनाविरहात्। तथा च—'विष्णोरराटमसि' इत्यादिकं कृष्णाष्टम्यां 'योगाय योगेश्वराय' इत्यादिकं नित्यपूजायां विनियुक्तं न दोषाय इति भावः।

न च नित्यपूजाप्रकरणाम्नातमन्त्रस्य नित्यपूजायाम्, काम्यपूजाप्रकरणाम्नातस्य काम्यपूजायां विनियोग; प्रकरणरूपविनिगमकसत्त्वात् इति वाच्यम् लिङ्गापेक्षयातस्य दुर्बलत्वात्। सन्निधानरूपस्याधिकाराख्यप्रकरणस्याङ्गत्वाग्राहकत्वात्। आकाङ्क्षाख्यप्रकरणस्य सर्वत्राविशेषात्। द्वयोरेव पूजयोर्मन्त्रसाकाङ्क्षत्वस्य द्वयोर्मन्त्रयोः प्रधानसाकाङ्क्षत्वस्य च सत्त्वात्। मन्त्रस्य सिद्धरूपतया प्रकरणाविषयत्वाच्च। किञ्च, यत्रैकस्मिन् कर्मणि श्रुत्या बहवो मन्त्रा विनियुक्ताः सन्तितेषां तत्रैकदा विनियोगे बाधकाभाव इति चेन्न? तेषां विकल्पेन विनियोगात्। अत एव तृतीयाध्याये दृष्टार्थानि षोडशकरणानि नैकत्र समवयन्तीत्युक्तम्। तस्माद् व्रीह्यादिवद् विकल्प एव। अतएवोक्तं विकल्पाधिकरणे—'तुल्यार्थास्ते विकल्पेरन्निति' सूत्रम्। तत्र लिङ्गविनियुक्ते मन्त्रविशेषे क्वचित्प्रकरणं तात्पर्यग्राहकम् यथा पूजायां क्वचित्क्रमः यथा वाक्ये।

अत्रेदं बोध्यम् प्रकृतावुपदिष्टमन्त्राणां प्रकृतावशक्यार्थप्रकाशनायाम्नातपदस्यलक्षणैव स्थलान्तरे तदाम्नातपदानां प्रयोगासम्भवात्। विकृतौ चातिदेशप्राप्तस्य मन्त्रस्य कर्मसमवेतार्थप्रकाशकत्वे लाघवानुरोधात्। तत्समवेतार्थस्य प्रकाशनाय तदर्थशक्तपदस्यैव ऊह इति सिद्धान्तिनामाशयः।

[1]अप्राप्तावतिदेशतो जपमनावावाहनार्थे मनौ
श्रुत्याख्या पदरूपहानिमरुदागन्तव्यतासिद्धिभिः।
ऊहो नैव भवेद् भवेदथ पुनस्तेभ्यः परत्रान्यथा—
नुत्पत्त्या कवलीकृतो यदि पुनर्नाम्नातशब्दो भवेत्॥
अप्राप्तावतिदेशतो जपमनावावाहनस्तोत्रयो
र्द्रव्ये चानुकृते प्रधानमनुषु प्रोक्तेषु नोहः स्मृतः॥
श्रुत्यादेः श्रवणाज्जपाय विहिता नाद्यानुपूर्वीपदाद्
देवानागमनात् स्वनामकथनात् मुख्यात्मबुद्ध्याग्रहात्॥

---

१—इतश्चतस्रः पंक्तयस्तालपत्रे न सन्ति।

[द्रव्योहचिन्ता]

अथ द्रव्योहः । तत्र पार्थसारथिमिश्राः—'अग्नये त्वा जुष्टं निर्वपामि' 'व्रीहीणां मेदः सुमनस्यमान' इत्येतौ मन्त्रौ सूर्यादिषु नीवारादिषु च ऊहितव्यावुत नेति संशये—

प्राकृते यादृशो मन्त्रश्चोदके न हि तादृशः ।
प्राप्यते विकृतौ तस्मान्नोहस्तत्रापि कल्प्यते ॥

कार्यद्वारेण मन्त्राः प्राप्यन्ते, कार्यञ्च अपूर्वसाधनीभूतद्रव्यदेवताप्रकाशनं-नाग्निदेवतास्वरूपमपूर्वसाधनं सौरयागे, किन्तु सूर्यदेवतास्वरूपमेव । न चाग्निपदं सूर्यं प्रकाशयितुमलम्, तत्र शक्तेरभावात् । अतः सूर्यपदं प्रक्षेप्तव्यम् । अथ सत्यम् सूर्य एव प्रकाश्यः, स तूपदेशप्राप्ताग्निपदेनैव गुणवृत्त्या प्रकाश्यताम् । तथा हि 'यथैन्द्रया गार्हपत्यमुपतिष्ठत' इति वचनादिन्द्रपदेनैव गुणवृत्त्या गार्हपत्यमुपस्थीयते तथेहापि प्रकृतस्यैवाग्निपदयुक्तस्य मन्त्रस्य सूर्ये प्रकशनाय नियुक्तत्वात् । तेनैव सूर्यः प्रकाशनीयः । अन्यथा, अर्थवशेन मन्त्राणामन्यथाभावकरणे गार्हपत्यवशादिन्द्रोऽपि मन्त्र ऊहितव्यः स्यात् । तस्मादेतावानेव मन्त्रणामन्यथाभावो यत्प्रकृतावग्निप्रकाशितो विकृतौ सूर्य इति न तु पठितः पदोद्धारः पदान्तरप्रक्षेपश्च युक्त इति चेत्

प्रकृतौ यादृशं रूपं मन्त्राणाञ्च विवक्षितम् ।
तादृगेवातिदेष्टव्यं विकृतौ नाविवक्षितम् ॥

प्रकृतावग्निपदं न स्वरूपविवक्षया पठितम्, अग्निपदयुक्तो मन्त्रः कथं स्यादिति । यदि ह्येवं भवेत् तदा तेनैव यथाकथञ्चित् प्रकाश्येत सूर्यः अपूर्वसाधनीभूतदेवतावाचिपदयुक्तो मन्त्रः कथं नाम स्यादित्यभिसन्धाय पठितमग्निपदमतस्तस्यैव प्रकृतौ देवतावाचित्वादवश्यं हि देवतावाचिपदयुक्तं मन्त्रमधिजिज्ञास्यमानैरग्निपदमेवाध्येतव्यम् । तथा तद्रूपविवक्षयाऽग्निपदपठितं तथा दृष्टार्थं भवति पदस्वरूपविवक्षायामदृष्टार्थकतैव स्यादेवं विकृतावप्यपूर्वसाधनीभूतदेवतावाचिपदयुक्त एव मन्त्रः प्रयोक्तव्यः । न चाग्निपदस्य ताद्रूप्यमस्तीत्यतः सूर्यपदप्रक्षेपः । एवं व्रीहिपदमपि हविःप्रकृतिद्रव्यवाचिपदाभिप्रायं न स्वरूपाभिप्रायमिति नीवारादिषूहसिद्धिः । षष्टिकादिषु बहुषु तद्वाचिषु सत्सु व्रीह्यादि-

पदपठितं ततो नियमादृष्टिमात्रं कल्प्यते, अवघातादिवत् । स्वरूपं तु अपूर्वसाधनीभूतद्रणाविशेषयाविपदविवक्षया प्रयुक्तम् दृष्टार्थत्वात् तस्मादूहः । ऐन्द्री तु स्वरूपेणैव गार्हपत्ये विनियुज्यत इति न वैषम्यमिति प्राहुः ।

अत्र प्रकृतिवद् विकृतिन्यायप्राप्तेषु मन्त्रेषु नोह इत्यस्मद्गुरुपगोपालभट्टः । अत्र पितृभक्तौ प्रेतश्राद्धप्रकरणे 'गतोऽसि परमां गति' मित्यत्र स्त्रीश्राद्धपक्षेऽपि 'गतोऽसी'त्येव पठनीयमिति लिलिखुर्नवीनवाचस्पतिमिश्राः । पार्थसारथिमिश्रास्तु नवमाध्याप्रथमपादव्याख्यावसरे व्याख्यातवन्तः।तथा हि—'धान्यमसि धिनुहि ते देवानि'ति मन्त्रे तण्डुलविनियुक्ते सतुषद्रव्यवाचित्वेन धान्यशब्दोऽसमवेतार्थ उतव्य उत नेति संशये कर्मसमवेतार्थत्वाभावाददृष्टार्थोऽयमतोऽनूह इति चेन्न, गौरवात् । न च तत्र धान्यपदस्य शक्तेरभावात् कथं तण्डुलप्रकाशनद्वाराऽदृष्टार्थत्वमिति वाच्यम्, तदनुपगमे दोषाभावात् । शालयो भज्यन्त इतिवदत्रापि लक्षणया तण्डुलस्य प्रकाशसम्भवात् । ननु शाट्यायने विकृतौ तत्र समये हविषि मांसमसि इति कथमूहः ?, तत्रापि लक्षणया मांसप्रकाशसम्भवादिति चेन्न, प्रकृते धान्यशब्दानामाम्नानान्यथानुपपत्त्या लक्षणाभ्युपगमेऽपि विकृतौलक्षणाभ्युपगमे बीजाभावात् मुख्य एव मांसशब्दः प्रयोक्तव्य इति दिक् ।

ननु 'व्रीहीणां मेदः सुमनस्यमान' इति 'धान्यमसि धिनुहि ते देवानि' ति मन्त्रयो र्नीवारमांसयोरूहवत् 'यवोऽसि यवयास्मद्द्वेषो यवयारातीः' 'तिलोऽसि सोमदेवे'त्यादि मन्त्रयोर्गोधूमाऽजाजीद्रव्योः प्रयोगे गोधूमादिपदमूहितव्यं न वेति संशये अथ कर्म समवेतार्थकत्वकल्पनालाघवादूहितव्यम्। न चोहकल्पने भ्रेषभ्रंशनिमित्तकप्रायश्चित्तादिकल्पनागौरवस्य वक्ष्यमाणत्वान्नोहितव्यमिति वाच्यम् तादृशगौरवस्य निरसनीयत्वादिति चेद् द्रव्यं द्विविधम् वैकल्पिकमनुकल्पश्च । तत्राद्य यवादेर्व्रीह्यादि । अपरं गोधूमादि । तत्राद्ये नीवारादिवदूह एव । अपरस्मिन् गोधूमादावनूहः । तथा हि मूलद्रव्यतया प्रतिनिधिर्नोपादानेऽभिवेपोऽसमवेतार्थत्वात् । तथा च सूत्रम्--यथार्थमूहश्चोदितेनार्थवत्त्वादिति । एवं व्याप्ते शब्देऽविप्रतिपत्तिः परार्थत्वादिति सूत्रम् । प्रधिद्रव्येऽप्युवदीयामानेऽविप्रतिपत्तिरविपरिण [णा ?] मोऽनूह इति यावत् कुत एतत् परार्थत्वात् यतः प्रतिनिधिद्रव्यम्

श्रुतद्रव्यबुद्ध्योपादीयते न तु स्वबुद्ध्या। 'तथाऽग्नीषोमाभ्यां छागस्य हविष' इति मन्त्रे मेषप्रतिनिहिते अग्नीषोमाभ्यां मेषस्य इत्यूहो न भवति। छागबुद्ध्या मेषस्य उपादनं तस्मानन्नूहः। यत्र वैकल्पिकद्रव्यमुपात्तं नष्टम् तत्रोपात्तस्य प्रतिनिधिरुपादीयते न तु श्रुतमपि वैकल्पिकान्तरम्। तथा च सूत्रम्-विकल्पे प्रवृत्तं कर्मान्तरत्वात्। प्रवृत्तं यजमानेनोपात्तम् तदेव ग्राह्यम्। प्रतिनिधिर्हि तद्बुद्ध्या उपादीयत इति तदेवेति न कर्मान्तरत्वापत्तिः। वैकल्पिकान्तरस्योपादानं तु नास्य कर्मान्तरत्वात्। एतस्यानुपादेयत्वात्। विकल्पे चोभयोरशास्त्रार्थत्वात् कर्मान्तरत्वप्रसङ्गादित्यर्थः इत्यन्ये। श्रुतद्रव्यस्याभावे प्रतिनिधेरुपात्तस्य नाशे श्रुतद्रव्यस्यैव पुनः प्रतिनिधिर्ग्राह्यो न तु प्रतिनिधेरुपात्तस्य प्रतिनिधिरित्यत्र सूत्रम्—प्रतिनिधेस्तत्कालात् श्रुतद्रव्याभाव एव हि प्रतिनिधेः कालः। तस्यापि नाशे च तस्यापि प्रतिनिधेः कालत्वं नेत्यर्थः। यत्र श्रुतद्रव्यमल्पमर्थानिर्वाहकम् तत्रार्थनिर्वाहकः प्रतिनिधिरेवोपादेयः। तथा च सूत्रम् अर्थद्रव्यविरोधे तत्समर्थं तत्परत्वात्। एवमर्थद्रव्यविरोधे यदर्थाभिनिर्वृत्तिसमर्थं तदश्रुतमपि प्रतिनिधिद्रव्यं ग्राह्यम् नार्थानिर्वाहकं श्रुतमपि। कुत एतत्? अर्थाभिनिर्वृत्त्यर्थत्वाद् द्रव्यस्य। येनार्थो न निर्वहति तत् सदप्यसदेव। यत्र सगुणं द्रव्यं विधीयते कृष्णानां व्रीहीणां दर्वी होम इत्यादौ। तत्र चेदकृष्णा व्रीहयः सन्ति कृष्णा नीवारास्तत्र सूत्रम्—गुणद्रव्ययोर्द्रव्यं प्रधानयोगात्। द्रव्यगुणयोर्विरोधे द्रव्यमुपादेयं न गुणः। द्रव्यं हि प्राधान्येन संयुज्यत इति सन्निकृष्टं गुणः वस्तुविशेषणत्वेन द्रव्यमनुगृह्णातीति विप्रकृष्टम्। सन्निकृष्टविप्रकृष्टयोः सन्निकृष्टे सम्प्रत्ययः। एवं यत्रोक्तगुणविशिष्टवैकल्पिकद्रव्यान्तरसत्त्वेऽपि यथोक्तगुणशून्यस्य तद् द्रव्यस्य वोपादाने सिद्धे सुतरां यथोक्तवृषमालाभे निषिद्धेतरवृषभेणापि वृषोत्सर्गसिद्धिः। एवं श्वेतशाल्यादिविनियोगेऽपि बोध्यम्। अत एव तदलाभे हट्टक्रीतेनाप्यन्नेन पार्वणादिकमाचरन्ति शिष्टाः। अतः एवं च वृषविशेषालाभेऽपि सामान्यलाभे बाधकाभावात्। सामान्यलाभस्त्वधिकारिकर्त्तव्यत्वेनाशौचान्ताद् द्वितीयेऽह्नि इत्यादिवाक्येन वृषोत्सर्गादीनां कथनादेव। अपि च—

यस्य प्रगायते शृङ्गे मुखाभिमुखे सदा।
सर्वेषामेव वर्णानां स च सर्वार्थसाधकः॥

इत्यादिना साधारण्येन वृषान्तरकथनात् तत्र तेन श्यामवृषं विना शूद्रस्य वृषोत्सर्गो वृथेति भ्रान्तवचनमपास्तम् । अन्यथा ब्राह्मणादीनामपि विशिष्टकथितवृषविशेषं विना वृषोत्सर्गो वृथेत्यपि स्यादिति **वटेश्वरात्मजपक्षधरोपाध्यायलेखोऽपि** साधु सङ्गच्छते । सामान्यलाभप्रापकं विशेषवचनं विनाऽपि भ्रान्तेरुपपत्तेः ।

ननु वेदानधिकारिण शुद्रस्य वृषोत्सर्गानधिकार एव क्व सामान्यविशेषभावचर्चाऽपि सत्येवाधिकारे तत्सम्भवादन्यथा वेदपाठानधिकारिस्त्रीणामपि तथा प्रसङ्ग इति चेत् अत्र **केचित्** शूद्राणामविद्यत्वेन अनधिकारो मा भूदिति तदधिकारसिद्धये कृष्णेनाप्यन्त्यजन्मना इत्युक्तम् । तथा चान्त्यजन्मपदेनाविद्यमात्रपरतया शूद्रसङ्ग्रहः अविद्यत्वं शूद्राणामिव स्त्रीणामपीति तासामधिकारोऽनेन बोध्यते सामान्यकल्पनायां लाघवानुग्रहात् तण्डुलाह[हा]रवदिति **पितृभक्तितरङ्गिण्यामाहुः** ।

अत्र एतेषामयमाशयः । यथा यस्य निरुवतं हविश्चन्द्रमाभ्युदयात् स त्रेधा तण्डुलान् विभजेत इति सामान्यश्रवणात् तण्डुलत्वमविवक्षितम् । तेन सर्वेषामेव हविषां विभागो लभ्यते । तण्डुलपदस्य हविस्त्वावच्छिन्ने लाक्षणिकत्वात् । तस्माद् दर्शार्थं भ्रमेण शुक्लचतुर्दश्यां हविर्निर्वापे कृते चन्द्रदर्शनानन्तरं शुक्लपक्षविशेपदर्शने त्रेधा सर्वाणि हवींषि विभज्य 'विष्णवे ऊरुविक्रमाय द्वादशकपालं चरुं निर्वपेदि'त्यत्र विशेषवाचकतण्डुलपदस्य सामान्यधर्मावच्छिन्ने लक्षणा । यथा वा त्र्यणीकान्यायस्थले अहःपदस्य भागसामान्ये लक्षणा । तथाहि द्वादशदिनसाध्यसोमयागे ऐन्द्रवायवशुक्राग्रयणनामकानि त्रीणि होमपात्राणि तेषामेव होमे प्राथम्यमन्यपात्रापेक्षया तत्र संशयः । सर्वेषामेतेषां द्वादशस्वपि दिनेषु प्राथम्यमथवा एकैकस्यैकैकदिने द्वितीयकोटावपि कस्मिन् दिने कस्य प्राथम्यमिति संशये ऐन्द्रवायवाग्रौ प्रागयणीयोदयनीयौ । तथा च दशमम् , अथ प्रथमह ऐन्द्रवायवाग्रं अथ शुक्राग्रम् अथाग्रयणाग्रम् अथेन्द्रवायवाग्रम् अथ शुक्राग्रम् अथाग्रयणाग्रम् अथेन्द्रवायवाग्रम् अथ शुक्राग्रम् अथाग्रयणाग्रमिति त्र्यणीकाम्नानम् । एवं प्रजाकामा गवामयनमुपेयुरिति श्रुतं गवामयनस्यापि षष्ठ्यधिकशतत्रयदिनसाध्यतया सोमप्रकृतिकत्वेनातिदेशा त्र्यणीका प्राप्तिस्तत्र प्रथमभागे बाधकान्तरवशात् त्र्यणीकाबाधे द्वितीयभाग एव तत्प्राप्तिः स तु भागोऽशीत्यधिकशतदिनसमुदायः । स च विंशतिदिनविभक्तो दिनसमुदावो नवधा भवति । तत्र संशयः, किं विंशतिदिनपर्यन्तमैन्द्रवायवाग्रत्वमेव, अनन्तरं

विंशतिदिनपर्यन्तं शुक्राग्रत्वमिति वस्थानवृद्धिन्यायः । किं प्रत्येकमेकैकदिनरीत्यैव तेषामग्रतेति तत्र सामान्यतालाघवादहः पदमविवक्षितम् । तेन सोमयागस्य दिनरूपभागनवकस्य गवामयनस्य विंशतिदिनात्मकभागनवकस्य प्राथम्याद् दिनोद्देश्यत्वसम्भवात् लाघवसम्भवः । तथाऽत्रापि सामान्यतालाघवात् अन्त्यजन्मपदमविद्ये लाक्षणिकमतः स्त्रीशूद्रयोरपि वृषोत्सर्गेऽधिकार इति दिक् ।

अत्र **पितृभक्तिकर्तारो** वाचस्पतिमिश्राः न हि दृष्टान्तवलेन लक्षणा कल्प्यते, अतिप्रसङ्गात् । यस्य निरुप्तं [क्तं] हविश्चन्द्रमाम्युदयात् स ,त्रेवा तण्डुलान् विभजेदित्यादौ हविरिति सामान्यश्रवणात् युक्ता तण्डुलपदस्य हविःसामान्यपरता, एवं गवामयनस्याप्यहर्गणत्वाद् द्वादशाहविकृतिकत्वेन तद्वदहर्गणपूरणे अहस्त्वविवक्षायामभिमताग्रयणाग्रता न स्यादिति तदविवक्षा । अत्र तद्वन्न किमप्यनिष्टमापतति येन अन्त्यजन्मपदमविद्यपरं कल्प्येत । तस्माद् उत्सर्गकरणीभूतायां ऋचि 'एतं युवानं पतिं वो ददानि' इति सत्युत्तमपुरुषवत्त्वेन याजमान्यां सिद्धायामनूच स्त्रियास्तत्रानधिकारः स्वर्गकामत्वाविशेषेऽपि यागान्तरे स्त्रीशूद्रवत् शूद्रस्य तु कृष्णेनाप्यन्त [न्त्य?] जन्मन इति वृषोपदेशान्यथानुपपत्त्याऽधिकारे सिद्धे कृष्णेन वृषेण पितृगतस्वर्गकामो वृषोत्सर्गं कुर्यादिति विधावाक्षिप्ते कामिनो वृषोत्सर्गयागविषयके ममेदं कार्यमिति ज्ञाने प्रवर्तके सिद्धे कामिनो ममेदं कार्यमिति प्रवर्तकं ज्ञानं फलशिरस्कनियोगविषयीभूतक्रियायामेव सम्भवतीति नियमेन शूद्रस्यापि सर्वाङ्गसम्पन्नवृषोत्सर्गाधिकारे सिद्धे ब्राह्मणवत् शूद्रोऽपि सर्वमन्त्रसिद्धं वृषोत्सर्गं कुर्यादिति सिद्धम् । न चैवं श्राद्धेऽपि शूद्रस्याङ्गीभूतसर्वमन्त्रस्याधिकारः स्यात् प्रधानाधिकारबलादिति वाच्यम् तत्र मन्त्रवर्यं [र्ज्जं?] मिति विशेषोपदेशादित्याहुः ।

अत्र प्रायशो **मिश्राणामयमाशयः** । एकस्यैव विंशतिदिनपर्यन्तमावृत्तौ स्वस्थानविवृद्धिन्यायसम्भवः । एकैकस्य प्रत्येकं करणे दण्डकलितावृत्तिन्यायः सम्भवति । तथा च स्वस्थानविवृद्धिन्यायेन गवामयनेऽभिमताया आग्रयणाग्रतायाः सिद्धिः अन्यथाऽसम्भव इति ।

अत्र **जीर्णोद्धारकृतः**, अनाकाङ्क्षितमुद्देश्यविशेषणं न विवक्ष्यते तण्डुलत्ववत् । ऐन्द्रवायवाग्रं प्रथममित्येतावतैव योग्यताबलेनोद्देश्यलाभेऽधिकाकाङ्क्षाविरहात् । तथाहि, अवयविरूपे कर्मणि विरुद्धधर्मान्वियोऽवयवद्वारा योग्योऽन्यथाऽनन्वयात् । तस्मात् तण्डु-

लत्वदविवक्षितमहत्त्वम्। किञ्च त्रयस्त्रिशनामकर्माधिकरणे उत्तरषण्मासे षष्ठदिने मन्त्रलिङ्गानुरोधात् आग्रयणाग्रताऽभिमता सा चैन्द्रवायवादीनां दिनधर्मत्वे न सम्भवति। उत्तरे पक्षसि व्यावृत्तं पक्षमुपयन्तीति विधानात्। तस्यार्थः, प्रथमे पक्षसि त्र्यणीकायामैन्द्रवायवाग्रं प्रथमम्, अथ शुक्राग्रम्, अथाग्रयणाग्रम इति यो विहितः क्रमः तद्विपरीतक्रमेणावृत्तत्र्यणीकात्रयावृत्तित्रययुक्तमुत्तरपक्षमुपयन्तीति। तथा चोत्तरषण्माये आग्रयणाग्रशुक्राग्रैन्द्रवायवादिक्रमेण त्र्यणीकायां वर्तमानायां षष्ठदिने ऐन्द्रवायवाग्रत [ता?]स्यात् न त्वाग्रयणाग्रतेति विरोधे भागधर्मत्वे तु विंशतिदिनात्मकप्रथमभागे आग्रयणाग्रतेति षष्ठदिने भवत्यभिमताऽऽग्रयणाग्रता। अत एव गवामयन इति समाख्याऽपि गवां सूर्यरश्मीनामयनवदिति व्युत्पत्तेः। सूर्यस्य हि उत्तरायणदक्षिणायणयोर्विरुद्धगतिकतया उत्तरायणे चरमभोग्याया एव नाड्या दक्षिणायणे प्रथमभोग्यत्वादिति प्राहुः।

अत्रेदं विभावनीयम्, वृषोपदेशान्यथानुपपत्त्या कल्पितः कृष्णेन वृषेण पितृगतस्वर्गकामो वृषोत्सर्गं कुर्यादिति विविरायातु सर्वमन्त्रसिद्धं वृषोत्सर्गं कुर्यादे ।वद्दूष [ण] कल्पने मानाभावः। न च ममेदं ज्ञानमिति प्रवर्तक ज्ञानं फलसमर्थायामेव नियोगविषयक्रियायां सम्भवति सामर्थ्यं साङ्गस्येव कर्मणस्तेन साङ्गस्यैव आक्षेपेण तथाविधकल्पनमुचितमिति वाच्यम्, इष्टसाधनत्वबोधकपदादेव तदुपपत्तेः।

ननु भट्टमते यथा साध्यसाधनेत [ति] कर्तव्यताबोधकविधिवाक्यकल्पना पतृगतस्वर्गकाम [मः] कृष्णवृषोत्सर्गं कुर्यादित्याकारिका वृषोत्सर्गकरणिका मन्त्रा इतिकर्तव्यताका पितृगतस्वर्गभाव्यका भावना तादृशप्रवर्तनाजन्येत्यर्थका तथाऽत्रापीतिकर्तव्यतापर्यन्तमाक्षिप्य इति चेन्न, मन्त्राणां विधैव विनियोगसिद्धौ लिङ्गानामविनियोजकत्वप्रसङ्गात्। न चेतिकर्तव्यतात्वेन विधेर्विनियोगसम्भवेऽपि ।केन मन्त्रेण त्यागः प्रकाश्य इति विशेषत आकङ्क्षानिवर्तकत्वेन लिङ्गोपयोग इति वाच्यम्, मन्त्रस्य सिद्धरूपत्वात् इतिकर्तव्यतात्वाभावात्। आकाङ्क्षाख्यप्रकरणविषयत्वस्य [मीमांसकै]रनङ्गीकारात्। लौकिकवाक्येनैव तत्प्रकाशसम्भवाच्च। अस्तु वा मन्त्राणां प्रकरणविषयत्वम्, प्रकृते स्त्रीशूद्रौ नाधीयेतामिति निषेधबाधात् न मन्त्राणां प्रकरणेन विनियोगः सम्भवति न वृषोत्सर्गविधिना देवतासङ्कोचः। तादृशसङ्कोचे मानाभावः। अन्यथा श्राद्धादावपि तुल्यरीत्यैव मन्त्राणां विनियोगः सम्भवति। न च श्राद्धादौ

शूद्रोऽप्यमन्त्रवत् कुर्यादित्यनेन मन्त्राणां निषेधः, तथापि स्त्रीणां श्राद्धादौ मन्त्रपाठस्य निवारयितुमशक्यत्वात् । न च शूद्रवृषोत्सर्गवत् स्त्रीणां श्राद्धोपदेशो विशेषतो नास्तीति 'भार्या पिण्डं पतिर्दद्यात्पत्ये भार्या तथैव चे'त्यनेन विशेषत एवोपदेशात् । तत्राप्युक्तरीत्या साध्यसाधनेतिकर्तव्यताविशिष्टभावनाबोधकवाक्यस्य यथोक्तप्रवर्तककार्यज्ञानजनकवाक्यस्य वा कल्पनायाः सम्भवात् । स्त्रीशूद्रौ नाधीयेतामिति निषेधरूपबाधकस्योभयत्र तुल्यत्वाच्च । तस्मादमन्त्रक एव शूद्रस्य वृषोत्सर्गो ऋगर्थसमानाकारकलौकिकवाक्येनेति सिद्धम् ।

पक्षधरोपाध्यायाः स्त्रियाऽपि कर्तव्यो वृषोत्सर्ग इति ध्रुवम्—

अशौचान्ताद् द्वितीयेऽह्नि श॰ ॰ दद्याद् विलक्षणाम् ।<br>
काञ्चनं पुरुषं दद्यात् फलवस्त्रसमन्वितम् ।<br>
सम्पूज्य द्विजदाम्पत्यं नानाभरणभूषणैः ॥<br>
वृषोत्सर्गञ्च कुर्वीत देया च कपिला शुभा ।<br>
छत्रञ्चोपानहञ्चैव प्रेतस्य हितकाम्यया ॥

इत्यनेन शय्यादानादिकर्तुः वृषोत्सर्गेऽधिकारावगमात् । न च वेदे तदनधिकारात् वेदसाध्यतत्कर्मणि तदनधिकारः । अन्यथा स्वर्गकाममात्रकर्तव्यतयाऽवगते यागेऽपि शूद्राणामधिकारापत्तिरिति वाच्यम् ।

इष्टापूर्तिर्द्विजातीनां धर्मः सामान्य उच्यते ।<br>
अधिकारी भवेत् शूद्रः पूर्ते धर्मे न वैदिके ॥

इति महाभारते शूद्रस्यानधिकारकथनात् वैदिके ज्योतिष्टोमादौ शूद्राणामपि तदनधिकारापत्तेः । न च शूद्रस्य वृषविशेषोपदेशान्यथानुपपत्त्या वेदं विनाऽपि तत्सिद्धिरिति वाच्यम्, वेदानधिकारस्य अबाधकत्वेऽपि अत्रापि तदापत्तेः । अन्यथाऽशौचान्ताद् द्वितीयेऽह्नि इत्यादिना शय्यादिदानकर्तृमात्रकर्तव्यत्वेन प्राप्तवृषोत्सर्गान्यथानुपपत्त्या वेदं विनाऽपि स्त्रीशूद्रकृतवृषोत्सर्गसिद्धिरपि तुल्या । वृषोत्सर्गाधिकारसिद्धावेव वृषविशेषकथनमपि घटते, यथा ब्राह्मणादीनां तदधिकारसिद्धिस्तु अशौचान्तादित्यादिवाक्येन स्त्रीशूद्रयोरविशिष्टा ब्राह्मणादीनां वृषविशेषोपदेशादेव तत्तज्जातिविशिष्टस्त्रीणामपि वृष-

विशेषोपदेशप्राप्तेश्च। अन्यथा ब्राह्मणादीनां दशाहाशौचविधानात् ब्राह्मण्यादीनां तन्न स्यात् न स्याच्च तद्वधे ब्रह्महत्यादिव्रतं [पापं ?]।

ब्रह्मपुराणे—

वृषभः कृष्णसारस्तु प्रत्यग्रश्च त्रिहायनः।
मनोज्ञो दर्शनीयश्च सर्वलक्षणसंयुतः॥
अष्टाभिर्धेनुभिर्युक्तश्चतुर्भिश्चाथवा क्रमात्।
त्र्यहायनीभिर्द्धन्याभिः स्वरूपाभिश्च शोभितः॥
सर्वोपकरणोपेता सर्वशस्यचरो महान्।
उत्स्रष्टव्यो विधानेन श्रुतिस्मृतिनिदर्शनात्॥

न च वेदसाध्यवृषोत्सर्गे शूद्रस्याधिकारवलात् शूद्रेणापि वृषोत्सर्गे वैदिकमन्त्र-पाठः कर्त्तव्य इति युक्तमेवं सति स्त्रियाऽपि वेदपाठः कर्त्तव्य कर्तव्याः विशेषात् ओमिति चेत् न, तथा मति स्वर्गकामो यजेतेत्यत्रापि स्वर्गकामसामान्ययागाधिकारवलात्। स्त्रीशूद्रयोरपि यागे वेदपाठापत्तेः। न च तयोर्वेदपाठनिषेधात् स्वर्गकामपदस्य त्रैवर्णिक परत्वेनापि पदार्थत्वाक्षतेः। वृषविशेषोपदेशस्तु शूद्रपदेन यदि त्रैवर्णिक एवोच्यते तदा जातिविशेषस्य पदार्थस्यैव हानिः त्रैवर्णिकनिषिद्धशूद्रविहितवृषविशेषस्य त्रैवर्णिके विधानविरोधश्चेति वाक्यं स्वर्गकामवाक्ये सामान्यस्यैकदेशवाधापत्तेः। सामान्यबाधा-देकदेशवाधो लघुरिति चेन्न बाधकसत्वे सामान्यैकदेशबाधयोरप्रयोजकत्वादन्यथा लक्षणोच्छेदापत्तेः। किञ्चैवं, वर्षासु रथकार आदधीत्, इत्यत्र रथकरणयोग्य-त्रैवर्णिकस्याधानविधिर्नास्ति किन्तु रूढ्यर्थरथकारत्वजातिविशिष्टस्येति **गुरुमते** महत्यनुपपत्तिः। तत्रापि यथा स्त्रीशूद्रयोर्विद्यानिषेधेन स्वर्गकामपदस्य त्रैवर्णिकपरत्वं तथा रथकारस्यापि विद्यानिषेधेन रथकारपदस्यापि त्रैवर्णिकपरत्वौचित्यात् योगरूढ्य-र्थयो रूढ्यर्थमात्रवाधात्। तस्माद्यदि केनचिदुपायेन जातिविशेषावच्छिन्नस्याधान विधिस्तदा विद्यां विनापि स्त्रीशूद्रयोः श्राद्धादिनिर्वाहवदाधाननिर्वाहोऽपि-स्यात्। न च शूद्रस्य विशिष्टवृषोत्सर्गविधिसत्वेन वेदपाठनिषेधकशब्दस्य तदितर-परत्वं युज्यत इति वाच्यम्। एवं हि शूद्राणां विशिष्य वृषविधिवेदपाठनिषेध-

विध्योस्सत्वे अर्थलभ्यवेदपाठसङ्कोचस्यैव न्या [य्य] त्वात् । न चानयैवोत्सृजेरन्निति विशिष्य वेदपाठविधानमप्यस्तीति युक्तं अस्यापि सामान्यतो विधायकत्वाद्विशिष्य वेदपाठनिषेधकशब्दसङ्कोचकत्वानुपपत्तेः । एवं स्त्रीशूद्रयोरपि वृषोत्सर्गाधिकारित्व-सिद्धौ विद्यां विनापि तत्सिद्धिरिति रम्यं उत्सर्गश्च वत्सतर्य्यो युष्माकं रुद्रदैवत मेतं वृषन्तरुणं पतिन्त्यजानि वत्सतर्यो यूयमपि नो मयोपभोक्तव्या किन्तु त्यक्तास्सत्यो वनेष्वनेन पत्या जननशीलेन सह स्वच्छन्दं श्र[क्र] मथेत्यनेन ऋगर्थसमानार्थक लौकिकवाक्येन ताभ्यां कर्त्तव्य इत्याहुः पितृभक्तौ वाचस्पतिमिश्राः । एतं युवानं वो पतिन्ददानीति ऋचा चत्वारो वर्णा वृषमुत्सृजेरन् अनयैवोत्सृजेरन् 'इति पारस्कर वचनादिति प्राहुः । अत्रेदं विभावनीयम् अनयैवोत्सृजेरन्निति नियमविधिरेवेति मिश्राणामाशयः । एवकारस्य नियमार्थत्वात् ।

शयनीबोधनीमध्ये या कृष्णैकादशी भवेत् ।

सैवोपोष्या गृहस्थेन नान्या कृष्णा कदाचन ।।

इति वदेवकारार्थः परिसंख्यानमस्तु । न चायं विधानस्य निषेधस्य वा नियमस्सम्भवति, पाक्षिकप्राप्त्यभावात् । तथा हि, एतद्वाक्यपूर्वं ।

'एकादशीं सदोपोष्या पक्षयोरुभयोरपी, ।

त्यनेन एकादशीत्वावच्छेदेनोपवासप्राप्तिरेवं कृष्णैकादशीत्वावच्छेदेन 'शुक्लामेव सदा गृही' त्यनेन निषेधस्य वा प्राप्ती रागादुपवासनिषेधस्यैव तथा प्राप्तिश्च ।रिसंख्याने अवच्छेदकावच्छेदेनैव प्राप्तेस्तन्त्रत्वमित्येव तत्र चान्यत्र च प्राप्तावित्या-देरर्थः । परिसंख्याव्यञ्जकमेव नान्या कृष्णा कदाचनेति । अतएव निषेधस्यापि न नियमः, अवच्छेदकावच्छेदेन निषेधविधानविध्योः प्राप्तिसामान्यसम्भवेन पाक्षिक प्राप्त्यसम्भवात् । तथा च, यथा शयनीत्यादौ चातुर्मास्यकृष्णैकादश्युपवासनिषेध-परिसंख्या तथात्रापि प्र[कृ]तवृषोत्सर्गातिरिक्तवृषोत्सर्गे तादृशऋक्करणकत्वपरिसंख्यान-सम्भव[ः] । नचान्यत्र परिसंख्यानेन तत्प्रतियोगिनि विधिरायाति येन तादृशवृषोत्सर्ग-त्वावच्छेदेन ऋक्प्राप्तिर्भवेत् । तथासति एकभुक्तादावेकभोजनपरिसंख्यानेन प्राप्तद्वितीय-भोजनविधानापत्या उपवासदिनोत्तरदिने कर्म्मकरणे निरङ्कुतापत्तिरिति चेन्न, तत्र पाक्षिकप्राप्त्यभावेन तथासम्भवात् । प्रकृते पाक्षिकप्राप्तेरव्याहृतत्वमेव । ननु—

वासरे वा निशायां वा यत्र स्वल्पाऽपि रोहिणी।
विशेषेण नभोमासि सैवोपोष्या मनीषिभिः ॥

इत्यादिवत्परिसंख्यानमस्तु एवकार इति चेत् न, तत्रापि कृष्णपक्षे नभोमासीत्यादिना नभोमासीयकृष्णाष्टमीत्वावच्छेदेनोपोषणप्राप्तेः पाक्षिकप्राप्त्यभावात् । न चोत्सृजेरन्नित्यत्रापि पाक्षिकाप्राप्तिरेव एतद्वाक्यपूर्वं पितृगतस्वर्गकामकर्तृकवृषोत्सर्गत्वावच्छेदेनास्या ऋचो लिङ्गतयैव प्राप्तेरिति वाच्यम् लिङ्गवल्लौकिकत्यागवाक्यस्याप्यंशतः प्राप्तिसम्भवेनावच्छेदकावच्छेदेन तादृक्प्राप्त्यसम्भवात्, पाक्षिकप्राप्तेरक्षतत्वात् । अन्यथा अमन्त्रकत्यागमात्रस्यैव बाधापत्तिः । तस्मात्तादृशवृषोत्सर्गत्वावच्छेदेन तादृक्करणकत्वप्रापकनियम एवायमिति सिद्धम् । अस्तु वा सैवोपोष्येत्यादिवत् परिसंख्यैव, तथापि शूद्रकर्तृकवृषोत्सर्गे ऋचो विनियोगोऽक्षत एव तादृशवृषोत्सर्गकरणत्वस्य लोकलिङ्गाभ्यां लौकिकवाक्यतन्मन्त्रयोः प्राप्तौ लौकिकवाक्येनानेन वाक्येन परिसंख्यानादिति दिक् ।

अत्रेदम्बोध्यम्-सामान्यविधिबलेन स्त्रियोऽपि यद्यधिकारः तदा तस्या अपि ऋक्पाठपूर्वक एव वृषोत्सर्ग आयातीत्यपि सिद्धप्रायम् । यत्तु मिश्र रुक्तम्-उत्सर्गकरणीभूतायामृचि ददानीत्युत्तमपुरुषश्रुतेस्तस्या याजमानत्वसिद्धौ अनृचि स्त्रियां तद्बाधेन याजमानत्वबाधादिति । तत्रायमाशयो मिश्राणाम् । तथाहि, याजमानीत्वस्य श्रुत्यादिषट्कप्रमाणमध्ये लिङ्गरूपतयैवायाति। तथा च स्वपाठकर्तृकर्तृकदानकर्तृप्रकाशकत्वरूपयाजमानीत्वलिङ्गेन प्राप्ताया ऋचोऽनृचि स्त्रियां बाध इति तदप्यापातरमणीयमेवाभाति सामान्यधि[धी ?]बलेन स्त्रीणां यद्यधिकारस्तदा स ऋक्त्वस्यापि शूद्रस्यापि स्त्रीशूद्रयोस्तुल्ययोगक्षेमत्वादित्यलमधुनाऽप्रकृतेनेति प्रकृतमनुसरामः । वर्द्धमानोपाध्यायाः घृतमाज्यार्थे प्रतिनिधिर्भवति तदलाभे दधि पयो वा तण्डुलपिष्टानि वाद्भिः संसृष्टान्याज्यार्थान् कुर्वन्ति । यत्र घृतव्यतिरिक्तमाज्यं विहितम्, तदलाभे घृतमाज्यम् तथा च सूत्रम्-आज्यं संस्कुरुते सर्प्पिस्तण्डुलं दधि पयो यवागुञ्चेति । तथा च

घृतं वा यदि वा तैलं पयो वा दधि यावकम् ।
संस्कारयोगादेतेषु आज्यशब्दो विधीयते ।

तत्र न्यायेनापि सदृशमात्रे प्राप्ते यत्र तद्विशेषविधानं तत्र नियमार्थो 'विधिः । तथा यदि 'सोमन्नविन्देत पूतिकानभिषुणुयादि'ति कृत्यरत्नाकरे आज्यार्थे तैलं

प्रतिनिधिरिति पाठत्वात्तत्र गव्यमाज्यं प्रथमं, तदभावे माहिषं, तदभावे आजं, तदभावे तैलं तत्रापि प्रथमन्तिलजं तदभावे यवतिलजं, तदभावे कौसुम्भं, तदभावे सार्षपं, तदभावे दधि पयो वा, तदभावे तण्डुलपिष्टानि यवपिष्टानि वेति व्याख्यायते ।

'आज्यहोमेषु सर्वेषु गव्यमेव भवेद्घृतम् ।
तदभावे महिष्यास्तदाजमाविकमेव च ।

तदभावे तैलं स्यात्तदभावे जवतिलम् । स्वयंजाततिलप्रभवं, तदभावे कौसुम्भं, तदभावे च सार्षपमितिवौधायनवचनंप्रमाणत्वेन लिखित्वा बौधायनोपरोधाच्च कल्पतरुपारिजाताभ्यां व्यवस्थामाहुरित्युक्तम् ।

**विष्णुधर्मोत्तरे**—

'दध्यभावे पयः कुर्य्यान्मध्वभावे तथा गुडम् ।
घृतप्रतिनिधिं कुर्य्यात्पयो वा दधि वा नृप ॥' इति ।

दीपमधिकृत्य **महाभारते**—

'हविषा प्रथमः कल्पो द्वितीयस्त्वौषधीरसैः ।
वसामेदोऽस्थिनिर्य्यासैर्न कार्य्यः पुष्टिमिच्छता' ॥

तत्र प्रथमाध्याये **कात्यायनः**—शब्दोऽविप्रतिपत्तिः प्रतिनिहिते द्रव्ये श्रुतद्रव्यबुद्ध्या क्रियते । तत्र शब्दान्तरबुद्धिर्भवतीति **कर्कः** । तदेव सोमप्रतिनिधित्वेन पूतिकेषु गृहीतेषु सोमः परत इत्यविकृत एव मन्त्रः पठ्यते । एवं 'छागप्रतिनिधौ मेषे गृहीतेऽग्नीषोमाभ्यां छागस्य वपया मेदसोऽनुब्रूहीति' मन्त्रेऽपि नोहः क्रियते । **श्राद्धचिन्तामणौ वाचस्पतिमिश्राः**—तिलोऽसि यवोऽसीत्यादयो मन्त्रा नोहनीया [:]तं[तान्]विनैन प्रकाश्यप्रकाशनादिति प्राहुः ।

श्रुवादेस्तेषु सामर्थ्यादवदानादिकर्मणाम् ।
मन्त्राणां वाचकत्वेन प्रयोगो द्रव्यदेवयोः ॥
विकल्पमनुकल्पञ्च प्रधानस्य भवेद्द्वयम् ।
द्रव्यत्वोहो विकल्पे स्यादनुकल्पे चोह्यता ॥

**इति मीमांसारसपल्वले द्रव्योहतरङ्गः ।**

[वाक्यनिरूपणम्]

अथ वाक्यं निरूप्यते। अङ्गत्वघटकीभूतपरोद्देश्यत्वकृतिकारकत्वान्यतरपदार्थं बोधकपदकल्पनानुकूलश्रुतपदसन्निधिः, स चाङ्गत्वघटकीभूतकरणत्वकर्म्मत्वान्यतरविषयकशक्त्यजन्यशाब्दबोधानुकूलपदसमभिव्याहारो वाक्यम्। अथवा अङ्गत्वघटकपरस्परपदार्थसंसर्गवृत्तिशक्त्यप्रयोज्यविषयताकशाब्दबोधानुकूलपदसभिव्याहारो वाक्यम्, तदर्थश्चाङ्गत्वघटकीभूतं यत्करणत्वं कर्मत्वं वा तदन्यतरविषयताको यः शक्त्यजन्यो बोधस्तदनुकूलः समभिव्याहारो वाक्यम्। अङ्गत्वघटको यः परस्परपदार्थद्वयसंसर्गः शक्त्यजन्यो यस्तद्वृत्तिविषयताकशाब्दबोधस्तदनुकूलत्वं धेनुर्द्दक्षिणेति समभिव्याहारे वर्त्तते। धेनुकरणत्वस्य संसर्गविधयैव भानाङ्गीकारात्। धेनुप्रकारतानिरूपिता या करणत्वनिष्ठा संसर्गता तन्निरूपिता दक्षिणानिष्ठा विशेष्यता तत्कशाब्दबोधं प्रति धेनुपदसमभिव्याहृतदक्षिणापदसमभिव्याहारः कारणम्। अतो धेनुर्द्दक्षिणेत्यत्र लक्षणमस्ति। एवमुच्चै ऋचा क्रियत इत्यादि वाक्ये लक्षणमस्ति उच्चैःस्वरविशिष्टऋक्करणकङ्कर्म्म इत्यन्वयस्तत्रोच्चैस्त्वविशिष्टस्वरनिष्ठप्रकारतानिरूपिता या कर्म्मनिष्ठविशेष्यता तन्निरूपितसंसर्गतयैव करणत्वादेर्भानात्। तथा च ऋगादिनिष्ठं यदगंत्वं तद्घटकीभूतं कर्मनिरूपित ऋक्निष्ठं करणत्वं तद्वृत्तिर्या शक्त्यप्रयोज्या सांसर्गिकी विषयता तद्विषयताको यो ऋक्करणकं कर्मेत्याकारकः शाब्दबोधस्तदनुकूलत्वं उच्चैः ऋचा क्रियत इत्यादि समभिव्याहारे वर्त्तत इति सर्वत्र लक्षणसगंमः।

वस्तुतस्तु **मीमांसकमते** सुबन्तयोः परस्परेणान्वयास्वीकाराद् भावनायामेवान्वयः। तथा च धेनुरिति प्रथमायाः करणत्वे लक्षणा दक्षिणापदस्य वेतनकर्म्मणि लक्षणा। तेन धेनुकरणिका वेतनसाध्यिका भावनेत्यन्वयबोधः। उच्चै ऋचेत्यत्र विभक्त्यर्थकरणत्वस्य प्रातिपदिकेनैव लक्षणया प्रतिपादनात्। शक्त्यप्रयोज्यशाब्दबोधघटितलक्षणे नाव्याप्तिः, अथवा उच्चैरित्यत्र कारणत्वस्य संसर्गविधियैव भानान्नाव्याप्तिः। धेनुर्दक्षिणेऽत्र तादृशसमभिव्याहारे सत्यपि तादृशसमभिव्याहारे धेन्वादि निष्ठदक्षिणाकरणत्वादिरूपयोग्यताव्याप्तिमविदुषस्तादृशबोधानुदयादेवं तादृशवाक्यस्य तादृशयोग्यतारूपलिङ्गेन तदर्थक श्रुतिकल्पत्वमविदुषस्तादृशश्रुतिकल्पनाद्वारप्रवृत्त्यनुपपत्तेः। तथा च धेनुर्दक्षिणेत्यादिसमभिव्याहारेण धेन्वादिनिष्ठदक्षिणाकरणत्वरूपयोग्यतात्मकलिङ्गानुमानम्। तेन योग्यतारूपलिङ्गेन धेन्वा दक्षिणां कुर्य्यादिति श्रुत्यनुमानम्। ततः

प्रवृत्त्यादि । न च यत्र उच्चैः ऋचा क्रियत इत्यादौ करणत्वरूपयोग्यताप्रतिपादकं तृतीया-पदं श्रुतमस्ति तत्र कथं श्रुतिकल्पनेति वाच्यम्, श्रुतपदस्यैव तत्तात्पर्य्यकत्वरूपधर्म्मं वैशिष्ट्येन कल्पनमेव श्रुतिकल्पनम् । तथा च वाक्यं लिङ्गं कल्पयति, लिङ्गं श्रुतिं-कल्पयतीति प्रणाल्या वाक्यमङ्गत्वे प्रमाणम् । तदिह विचार्य्यते-ज्योतिष्टोमे श्रूयते, उच्चैः ऋचा क्रियत इति वाक्यम् । ऋचा यत् क्रियते कर्म्म तदुच्चैःस्वरेण कर्तव्यमित्यर्थकं-ऋक्करणकर्म्मोद्देश्येन उच्चैस्स्वरविधायकमस्ति । अत्र संशयः, ऋक्पदेन यत्क्रियते कर्म्म तत्र सर्वत्र उच्चैः स्वरत्वं विधीयते उत ऋङ्मन्त्रेण यत् क्रियते तत्र । प्रथमकोटौ कर्म्माङ्गि-भूतऋग्वेदमुद्देश्यतावच्छेदकम्, द्वितीयकोटौ कर्म्माङ्गभूत ऋङ्मन्त्रत्वमुद्देश्यतावच्छेदकी-कृत्योच्चैःस्वरत्वं विधीयते । नन्वत्र ऋङ्मन्त्रेण क्रियते तत्कर्म तत्रैवोच्चैःस्वरविधानम् । न चोपसंहारीभूतस्योच्चैःऋचा क्रियत इत्यस्य समानविषयकत्वानुरोधेन उपक्रमेऽपि त्रयो वेदा अजायन्त इत्यत्र वेदपदस्य वेदैकदेशऋङ्मन्त्रे लक्षणापत्तिः उपक्रमोपसंहारयो-स्समानविषयकत्वादिति वाच्यम्, इष्टापत्तेः । न चोपक्रमस्थवेदपदस्य ऋग्वेदमात्रपरत्वं-शक्त्या ह्युपसंहारस्थोच्चैः ऋचा क्रियत इत्यादावेवोपक्रमसमानविषयकत्वानुरोधेन ऋङ्म न्त्रशक्तस्य ऋक्पदस्य ऋग्वेदे लक्षणास्तु विनिगमकाभावादिति वाच्यम्, अङ्गगुणविरोध न्यायविरोधापत्तेः । तथाहि यत्र प्रधानाङ्गयोर्विरोधस्तत्राङ्गस्यैव सङ्कोचः कर्त्तव्यः इति सिद्धान्तः, न तु प्रधानस्यापि । यथा दर्शपौर्णमासाङ्गभूताया दीक्षणीयाया इष्टैरङ्गस्य प्रधानाकालान्वितत्वेन दर्शपौर्णमासकालप्राप्तौ दर्शपौर्णमासकालयोः प्रधानविधि-नैव प्राप्तौ च दर्शपौर्णमासेष्टौ दीक्षिणीयायाश्चतुरोऽधस्तादिति विधिना च दर्शपौर्ण-मासदीक्षणीययोर्दिनचतुष्टयात्मककालान्तरप्राप्तौ संशयः । दीक्षणीयायाः प्रधान-कालदर्शादिकर्तव्यत्वमेव दर्शपौर्णमासेष्ट्योः दर्शादिपूर्वचतुर्थदिनकर्त्तव्यत्वम्, उत दर्शपौर्ण मासेष्ट्योर्दर्शादिकालकर्त्तव्यत्वं, दीक्षणीयायाश्च दर्शाद्युत्तरचतुर्थदिनकर्त्तव्यत्वम्, तत्र प्रधानाङ्गयोः सङ्कोचेन विरोधपरिहारसम्भवे अङ्गसङ्कोचस्यैवोचितत्वात् । तथा च दर्शादिर्दर्शादिफलकर्तव्यत्वं दीक्षणीयायाश्च दर्शाद्युत्तर चतुर्थदिन कर्तव्यत्वमिति सिद्धान्तः तथात्रापि त्रयो वेदा अजायन्त इति वाक्यास्यार्थवादत्वेन स्तुत्यङ्गत्वम् । उच्चै ऋचा क्रियत इति वाक्यस्योच्चैः स्वरविधायकत्वेन प्राधान्यादुपक्रमस्थवेदपदस्यैव सङ्कोच्यत्वात् वेदपदस्य तदेकदेशऋगादिषु लक्षणा साधीयसीं । वस्तुतस्तु वेदपदस्य वेदावयवे ऋगादौ न लक्षणा किन्तु शक्तिरेव, अन्यथा शूद्रान्न श्रावयेद्वेदानित्यादिनिषेधविधिविषय-

शूद्रस्य वेदैकदेशश्रवणे दोषानापत्तिः स्यादिति राद्धान्तः। त्रयो वेदा अजायन्त इति श्रवणानन्तरमेवेत्यवगम्यते, नूनमत्र वेदस्य स्तूयमानत्वादुपसंहारवाक्ये वेदादेरुद्देश्यत्वम्। यथाऽयं ब्राह्मणः समीचीनः पण्डित इत्यादौ प्राप्तस्य ब्राह्मणादेरुद्देश्यत्वं अप्राप्तस्य पण्डितत्वादेर्विधेयत्वम्। तथाऽत्रापि उपसंहारवाक्ये त्रयो वेदा इति वाक्येन प्राप्तस्य वेदस्योद्देश्यत्वमप्राप्तस्योच्चैःस्वरस्य प्राप्तत्वाद्विधेयत्वलाभः। तथा च ऋगादिपदं अनुवाद एव सदुद्देश्यवेदपरम्। न च ऋगादिपदस्य वेदे लाक्षणिकत्वे अङ्गगुणविरोध न्यायविरोधः। असंजातविरोधस्योपक्रमस्थवेदपदस्य वेदे तात्पर्यग्राहकस्य सत्त्वात्। उपसंहारवाक्यपूर्वमुत्पन्नस्योपक्रमस्थवेदपदस्य विरोधानुसन्धानाभावात्। यथा गङ्गायां घोष इत्यादौ गङ्गापदस्य तत्पदोत्पत्तिपूर्वं विरोधानुसन्धानाभावस्तेन घोष पदोत्पत्तिपूर्वं गङ्गापदेन पूर्वं स्मार्यते तथाऽत्रापि। तस्मादुपसंहारस्थऋगादिपदं ऋग्वेदे लाक्षणिकम्। न चोपक्रमावगतस्यापि वेदपदस्यावच्छेदाधिकरणन्यायेन परेण वाधः। औपनिषदे पूर्व्वोत्पन्नेनापि परस्य वाध इत्यर्थकावच्छेदाधिकरणन्याय सम्भवादिति। तस्येह विधेः स्तुतिसापेक्षत्वेनार्थवादवाक्यैकवाक्यताया आवश्यकत्वात्। पूर्वविरोधे परस्यानुत्पन्नत्वादेवाप्रवृत्तेः। ननु वेदपदशक्यतावच्छेदकीभूतवेदत्वस्यावयवावयविवृत्तित्वेनावयवेषु ऋगादिषु वेदपदस्य शक्तिरेव तात्पर्यविशेषसहकारेण वेदपदशक्यऋगादिमात्रं ऋक्पदशक्यतावच्छेदकीभूतऋक्त्वेन रूपेण उद्देश्यीकृत्योच्चैस्त्व विधानान्नोपक्रमविरोधो नवा लक्षणा क्वापीति चेत् न, वेदत्वस्य मन्त्रब्राह्मणसमुदायात्मकग्रन्थविशेष एव पर्याप्तत्वेनावयवपर्य्याप्तत्वाभावादुत्क्रमविरोधलक्षणयोर्दुर्वारत्वात्। अन्यथा एकवाक्याध्ययनेऽप्यध्ययमविध्यर्थसम्पत्त्यापत्तेः। शूद्रस्यैकपदश्रवणनिषेधस्तु वृन्ताकावयवादिनिषेधवन्नानुपपन्नः। तथाहि, वृन्ताकन्दद्यादिति विधौ वृन्ताकस्योद्देश्यत्वं साधनत्वं वा, तत्र वृन्ताकस्योद्देश्यत्वे वृन्ताकोद्देश्येन दानादिकं विधेयं स्यात् तन्न सम्भवति, वृन्ताकस्य स्वर्गत्वस्य स्वर्गसाधनत्वस्याप्राप्तत्वेन भाव्यत्वासम्भवेनोद्देश्यत्वासम्भवादुद्देश्यस्यैव भाव्यत्वात्। नहि ब्रीहीनवहन्तीत्यादिवद्वृन्ताकस्यापि स्वर्गसाधनत्वं कुत्रापि प्राप्तमस्ति ब्रीहिभिर्य्यजेतेत्येनेन प्राप्तयागसाधनत्वद्वारा स्वर्गसाधनत्वस्यापि ब्रीहौ प्राप्तत्वात्। न च वृन्ताकरूपफलोद्देश्येनैव दानस्य विधेयत्वमस्तु दानस्य वृन्ताकं प्रति अदृष्टद्वारकत्वकल्पनापेक्षया दानं प्रति वृन्ताकस्य दृष्टद्वारा साधनत्व-

कल्पनस्यैवोचितत्वात् । तस्मात् स्वर्गादिरूपफलोद्देश्येन वृन्ताकदानस्य विधेयत्वाद्विधेयकोटिप्रविष्टस्य वृन्ताकस्योपादेयत्वमेव वृन्ताकं दद्यादिति विधौ, एवं गान्दद्यादित्यादावप्यूह्यम् । वृन्ताकन्न भक्षयेदित्यादिनिषेधविधौ च वृन्ताकस्योद्देश्यकोटिप्रविष्टोद्देश्यत्वमेव । तथाहि वृन्ताकन्न भक्षयेदित्यादौ वृन्ताकभक्षणोद्देश्येन निषेधस्य विधिः । न च वृन्ताकभक्षणस्याप्राप्तत्वान्नोद्देश्यत्वमिति वाच्यम्, न कलञ्जं भक्षयेदित्यादौ कलञ्जभक्षणवत् वृन्ताकभक्षणस्यापि रागप्राप्तत्वात् ।

अत्रेदमवगन्तव्यम्, उपादेयत्वे अवयवविशिष्टावयविनां विधिरुपादेयत्वस्थले यावदवयवसाहित्यस्य विवक्षितत्वात् । तेन वृन्ताकखण्डदानेन न वृन्ताकदानसिद्धिः । वृन्ताकस्योद्देश्यत्वे वाऽवयवावयविसाधारणवृन्ताकत्वेनैव निषेधो नावयवसाहित्यविशिष्टावयविनां निषेधः । तथा च वृन्ताकखण्डमात्रभोजने निषेध एव । एवं 'शूद्रान्न श्रावयेद् वेदान्' इत्यादौ शूद्रकर्तृकवेदश्रवणस्य रागप्राप्तत्वेन उद्देश्यत्वेनावयवावयविसाधारणनिषेधात् तदेकदेशश्रवणेऽपि निषेध एव । ननु वृन्ताकं न भक्षयेदित्यत्र वृन्ताकमित्येकवचनात् पशुना रुद्रं यजेतेत्यादिवत् एकत्वविशिष्टवृन्ताकस्यैव निषेधः । न च पशुगतैकत्वस्य विधेयगतत्वेन विवक्षितत्वेऽपि वृन्ताकगतैकत्वस्योद्देश्यगतत्वेन न विवक्षेति वाच्यं एकवचनत्वस्य तुल्यत्वात् ।

तथा हि सोमे श्रूयते दशापत्रेण ग्रहं सम्मार्ष्टि दशापत्रं वासःखण्डः । तत्र यथा पशुना रुद्रं यजेतेत्यादौ पशुगतमेकत्वं विवक्षितं तथोद्देश्यगतमप्येकत्वं विवक्षितम् । किञ्च ग्रहं सम्मार्ष्टीत्यादौ मीमांसकमते ग्रहपदस्य ग्रहत्वजातिवाचित्वात् ग्रहं सम्मार्ष्टीत्यनेन जातेरेव संस्कारलाभे जातिसंस्कारस्य जात्याश्रयीभूतयत्किञ्चिद्द्रव्यसंस्कारेणैवोपपत्तेः । तस्मादेक एव ग्रहः संस्कार्य्य इति पूर्वपक्षः । तत्र राद्धान्तः—ग्रहमित्यत्र द्वितीयायाः संस्कारविशिष्टग्रहस्योद्देश्यत्वेन प्राधान्यंफलत्वम्, सम्मार्गस्य तज्जनकत्वेनाङ्गत्वेन गुणत्वम् । तथा च प्रतिप्रधानं गुणावृत्तिरिति न्यायेन सर्वेष्वेव ग्रहेषु सम्मार्गस्य कर्तव्यतानिश्चयेन सम्मार्ज्जनीयग्रहाणामियत्ताया अविभक्ति[वक्षि]तत्वात् । उद्देश्यगतमेकत्वं श्रूयमाणमप्यविवक्षितम् । ननु नेदमेकत्वमुद्देश्यग्रहगतम्, किन्तु स्वयमेवविधेयमिति चेत् न, वाक्यभेदापत्तेः । ग्रहं समृज्यातच्च? एकमिति विधेयद्वैविध्येन वाक्यभेदस्य दुर्वारत्वात् । पशुना यजेतेत्यादौ यागं प्रति गुणीभूत एव पशुरतः प्रतिप्रधान-

मिति न्यायस्याप्रसक्तेः । नायं ग्रहत्वजातेः संस्कारः येन यत्र कुत्रापि कृतेन सम्मार्गेण सा संस्कृतैव न व्यक्त्यन्तरे तदावृत्तिः स्याज्जातेरमूर्तत्वादसाधनत्वात्, किन्तु अपूर्वं साधनद्रव्याणामयं संस्कारः । तत्रापि यदि सम्मार्गम्प्रति गुणीभूतानि द्रव्याणि स्युः, पशुरिव यागं प्रति, तदा येन केनापि सिद्धेर्नावश्यं सर्वत्र सम्मार्गान्वयः । नहि प्रतिगुणं प्रधानावृत्तिः, प्रयोजनाभावात् । प्रधानानि तु इह द्रव्याणि सम्मार्गं प्रति द्वितीया-निर्देशात्, प्रयोजनवशाच्च । एवं प्रतिप्रधानगुणावृत्तेः सर्वेषामयं संस्कार इत्यवधारणे-नेयत्तारूपपरिच्छेदजनकापेक्षा न प्रतिप्रधानमिति न्यायेनावच्छेदकावच्छेदेन परिच्छिन्ने सम्मार्गेण इयत्तापरिच्छेदार्थं संख्याविवक्षापेक्षा सम्भवतीति परिच्छेदरूपद्वाराभावान्न क्रियान्वयः संख्याया विधातुं शक्यः ।

ननु प्रतिप्रधानमिति न्यायेन तादृशग्रहत्वावच्छेदेन प्राप्ते सम्मार्गे एकत्वविधानं परिसंख्यानं स्यात् । यथा रागप्राप्तभक्षणकपञ्चनखपञ्चनखेतरमांसभक्षणे, पञ्च पञ्चनखा भक्ष्याः पञ्चपञ्चनखेतरा इति परिसंख्या । तथा प्रकृतेऽपि वक्ष्यमाणैकत्ववद्भिन्ननिषेध एव विधेस्तात्पर्यम् । न चैकस्मिन् वाक्ये अत्यन्ताप्राप्तसम्मार्गप्रापकत्वेनापूर्वत्वं परिसंख्याविधित्वं च न सम्भवतीति वाच्यम्, विधाकयोः[?]सम्मार्ष्टिपदैकवचनपदयोर्भेदात्, इति चेत् न तावद्ग्रहं प्रत्येकत्वस्य विधेयत्वं यथा सम्भवति तथा ग्रहं प्रति सम्मार्गस्यापि विधेयत्वमिति न सम्भवति, तथासति विधेयभेदाद्वाक्यार्थभेदः । तेन वाक्यभेदः स्यात् । किञ्च ग्रहं संमृज्यात् स एक इति वाक्यार्थे शुद्धग्रहस्यैव सम्मार्गस्योद्देश्यतया-अन्वय एकत्वस्य संमार्गान्वयाभावेनाविशेषेणैव सर्वेषां ग्रहाणां सम्मार्गान्वयः स्यात्, नास्माकं समीहिता सिद्धिः । न च सम्मार्गविशिष्टस्य ग्रहस्यैकत्वं विधीयते, अतो न शुद्ध-ग्रहस्यैकत्वान्वय इति वाच्यम्, विशिष्टस्यानन्वयात् । सम्मार्गस्य विधेयतया अपूर्वत्वेन विशेषणत्वायोगात् विशेष्यतावच्छेदकप्रकारकज्ञानस्यात्यन्तमसम्भावितत्वाच्च । न च प्रथममेकत्वान्वयं स्वीकृत्यैकत्वविशिष्टग्रहस्य पश्चादुद्देश्यत्वरूपस्य सम्मार्गकर्म्मत्वस्या-न्वयः स्वीकरणीय इति वाच्यम्, सर्वेषां प्रत्येकमेकत्वादविशेषेणैव सर्वत्रान्वयात् । किञ्च, विभक्त्या संख्या कारकञ्च युगपदेवाभिधीयते, न तु प्रातिपदिकार्थस्य संख्या-मभिधाय पश्चात्तद्विशिष्टे कारकत्वम्, येनैकत्वविशिष्टस्य तस्य सम्मार्गं प्रति कर्म्मत्वं स्यात् । अथ पशुना रुद्रमित्यादौ तृतीयाया विजातीयपश्वेकत्वकरणत्ववद् द्वितीययापि

प्रकृते तादृशैकत्वकर्म्मत्वे युगपदेवैकत्रद्वयन्यायेनाभिधीयेताम्। तथा च यथा पशुनेत्यादौ स्वाश्रयपशुद्वारा एकत्वस्यारुणयेत्यादौ स्वाश्रयारूण्यद्वारा आरुण्यस्य च यागक्रयाङ्गत्वम् तथात्रापि स्वाश्रयग्रहद्वारा एकत्वस्याप्यङ्गत्वमिति चेदत्राहुः-एकत्वस्याङ्गसम्मार्गः सम्मार्गस्याङ्गमेकत्वं वेति संशये नाद्यः पक्षः। सम्मार्गस्यैकत्वाङ्गत्वं एकत्वमुद्दिश्य सम्मार्गविधानादेव सम्भवति। एवं सति प्रत्येकं ताभ्यामेकत्वग्रहरूपोद्देश्याभ्यां सह क्रियासम्बन्धार्थं प्रत्येकमेव ग्रहमेकत्वञ्चोद्दिश्य सम्मार्गविधानेन प्रत्युद्देश्यं वाक्यसमाप्तेर्वाक्यभेदापत्तेर्दुर्वारत्वात्। किञ्च, सम्मार्गस्यैकत्वविशिष्टस्यान्वयस्यानपेक्षितत्वेनाविशेषेणैव सर्वत्र सम्मार्गान्वयस्य दुरपह्नवत्वात्। न द्वितीयः, एकत्वस्य सम्मार्गाङ्गत्वे ग्रहमित्यत्र द्वितीयानुपपत्तिः। एकत्वस्य स्वाश्रयद्वारैव सम्मार्गान्वयः सम्भवति। ततः पशुनेत्यादिवत् तृतीयापत्तिश्च द्वितीयाया उद्देश्यत्वरूपप्राधान्यवाचित्वात्, पशुनेत्यादौ तृतीयाया एव गुणवाचित्वात्। न च सक्तून् जुहोतीत्यादिवद् द्वितीयाया करणत्वे लक्षणा स्वीकर्त्तुमर्हति, श्रौतार्थपरित्यागे बीजाभावात्। किञ्च, पशुनेत्यादिवद्यदि स्वाश्रयद्वारा एकत्वस्य सम्मार्गाङ्गत्वमुरीक्रियते तदा ग्रहस्यापि सम्मार्गाङ्गतापत्तिः। न चैकया एव द्वितीयया सम्मार्गं प्रति ग्रहस्योद्देश्यत्वं शक्त्या तं प्रत्येव एकत्वस्य करणत्वं लक्षणया प्रतिपादनीयमिति वाच्यम्, युगपद् वृत्तिद्वयविरोधात्। तस्मादेकत्वस्य सम्मार्गग्रहयोः प्राधान्येन गुणत्वेन च वाक्यभेदस्य दुर्वारत्वादनुपादेयत्वमेवेत्यविवक्षिता अत्र संख्या, अनुपादेयगतत्वादिति सर्वं सुस्थम्।

ननु यदु[दो]द्देश्यगता संख्या न विवक्षिता, तदा –

'अभुक्त्वा प्रातराहार निवेद्य व्रतमारभत्'।

इत्यादौ वृन्ताकं न भक्षयेदित्यादिस्थलीयबृन्ताकवदाहारस्योद्देश्यत्वेन निषेधस्य सम्मार्गवदविशेषेणैव।

सायम्प्रातर्मनुष्याणामशनं देवनिर्मितम्।

इत्यनेन प्राप्तयोर्दिवारात्रिभोजनयोः प्राप्तेर्व्रतपूर्वदिनेऽप्युपवासप्राप्तिरिति चेदत्राहुः सकृदुच्चरितः शब्दः सकृदर्थं गमयतीति न्यायादेकाहारपदेनैकस्यैवाहारस्य निषेधः। न चाधिकरणविरोधः, न्यायानुरोधेनाधिकरणस्य सङ्कोचादिति प्राञ्चः। तन्न कोटिघटाभिप्रायकघटः इति पदेन झटिति कोटिघटविषयकशाब्दबोधस्यानुभवसिद्ध-

तया तादृशन्यायस्यासम्भवात्। न च स्वरूपाणामेकशेष एकविभक्ताविति सूत्रेण लुप्तानां कोटिघटपदानां स्मरणं कल्पयित्वा शाब्दबोध इति वाच्यम् तावत्पदोपस्थितिकल्पने महागौरवात्। तावच्छाब्दबोधविलम्बस्यानुभवविरुद्धत्वात्। स्वरूपाणामिति सूत्रं प्रत्याख्यातवता भाष्यकारेण प्रत्याख्यातप्रायत्वाच्च। किञ्च, ग्रहवन्नाहारस्योद्देश्यत्वं, येन तद्गता संख्या अविवक्षिता स्यात्। न चाहारपदेन संस्कारविशिष्टं द्रव्यमुद्दिश्य भोजनभावो विधीयते, द्रव्यस्य भूतभाव्युपयोगाभावादसंस्कार्यत्वात्।

ननु वृन्ताकं न भक्षयेदित्यादौ, न कलञ्जं भक्षयेदित्यादौ च, यथा रागप्राप्तकलञ्जभक्षणोद्देश्येन वृन्ताकभक्षणोद्देश्येन च निषेधो विधीयते तथाऽत्रापि रागप्राप्ताहारभक्षणोद्देश्येन निषेधो विधीयते। आहारस्योद्देश्यत्वमेवेति चेन्न, वृन्ताकादिभक्षणस्य पापसाधनत्ववदत्र पापसाधनत्वस्याश्रुतेः। अत्र वदन्ति—वृन्ताकं न भक्षयेदित्यादौ यत्र समयविशेषे देशविशेषे वृन्ताकभक्षणस्य पापसाधनत्वं श्रुतमस्ति, तत्र रागप्राप्त वृन्ताकभक्षणोद्देश्येन निषेधे न कलञ्जं भक्षयेदित्यादिवद् गतिः। यत्र पुण्यजनकत्वं वृन्ताकभक्षणाभावस्य कार्त्तिकादौ श्रुतमस्ति तत्र स्वर्गाद्युद्देश्येन वृन्ताकभक्षणनिषेधस्य विधेयत्वमेव। तत्र संख्यादिविवक्षणे गां दद्यादित्यादिवद् गतिः। प्रकृते व्रतजन्यापूर्वमपूर्वसाधनीभूतञ्चोद्दिश्याहारभोजनाभाव एव विधीयते, अत उपादेयत्वमेवाहारस्यातस्तद्गतसंख्या विवक्षितैव। अत्र समयप्रदीपजीर्णोद्धारे मधुसूदनठक्कुराः—'नहि आहारमुद्दिश्य भोजननिषेधः तत्संस्कारकत्वेन विधीयते, द्रव्यस्य भाविभूतोपयोगाभावात्। किन्तु द्रव्यकर्म्मकभोजनाभाव एव क्रत्वर्थतया विधीयते। तत्र क्त्वावाच्यपूर्वकालतान्वयोऽप्रकृत्यर्थेऽपि निपातानां व्युत्पत्त्यन्तरस्यावश्यकत्वाद् घटो नास्तीत्याख्यातस्यार्थस्य संख्यायां प्रतियोगिनि विशेषणतयाऽन्वयादस्तित्वाभावप्रतियोगी घट इत्यन्वयस्वीकारपक्षेऽपि व्युत्पत्तिसङ्कोचस्यावश्यकत्वादिति नाहारस्योद्देश्यतेति प्राहुः।

तेषामयमाशयः—ग्रहं सम्मार्ष्टीत्यादौ यथासंस्कारविशिष्टग्रहोद्देश्येन सम्मार्गो विधीयते तथा द्रव्योद्देश्येन भोजनाभावस्य न विधेयत्वम्, भोजनाभावस्य द्रव्यासंस्कारकत्वात्, द्रव्यस्य भाविभूतकर्म्मानुपयुक्तत्वात्, किन्तु व्रतजन्यापूर्वोद्देश्येन क्त्वाप्रत्यार्थपूर्वकालिकत्वविशिष्टाहारभोजनाभाव एवात्र स्मृतिमूलकविधिविधेयः। न च क्त्वाप्रत्ययार्थ-

पूर्वकालिकत्वं भोजन एवान्वेति न तु भोजनाभावे, प्रकृत्यर्थान्वितस्वार्थबोधकत्वरूप-व्युत्पत्तिविरोधादिति वाच्यम्, व्युत्पत्तिसङ्कोचस्य सर्वग्रन्थकारसम्मतत्वादित्यलमप्रकृतेन ।

निषेधो वाऽथ संस्कारोऽवयवावयविवृत्तिना ।
रूपेण प्रतिपत्तव्यो न चावयवसंयुते ॥
ईदृशौ देशकालौ तु, ज्ञेयावुद्देश्यनामकौ ।
यथा न संख्या तत्रोक्ता तथावयवसंयुतिः ॥
एकादशीमुपवसेन्न कदाचिदतिक्रमेत् ।
न करोति च यो मूढ एकादश्यामुपोषणम् ।
मानवो नरकं याती—

त्यादिस्थलीय नित्यत्वप्रापकैकादशीमुपवसेदित्यादौ न कलञ्जं भक्षयेत् वृन्ताकं न भक्षयेदित्यादिवदेकादश्युद्देश्येन भोजननिवृत्तिरूपोपवास एकादशी-भोजनोद्देश्येन निवृत्तिर्वा विधीयते । वृन्ताकाधिकरणन्यायेनात्राप्येकादशीगता संख्या न विवक्षिता । अतोऽविशेषेणैव सर्वैकादशीभोजननिषेधः, एकत्वस्याविवक्षितत्वात् । एवं वृन्ताकाधिकरणन्यायेनावयवावयविसाधारण एकादशीत्वाक्रान्त-दण्डादिसाधारणो भोजननिषेधः।

नन्वेकादश्यां न भुञ्जीतेत्यादौ न कलञ्जं भक्षयेदित्यादिवद् बलवद-निष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वनिषेध एवार्थः, स चैकादशीकाल एव युज्यते । न च द्वादश्यामपि निषेधः कालमात्रक इति निषिद्धे कालवर्जनमित्यादि नानाविधि-स्मृतिसत्त्वादिति चेत् एकादशीमुपवसेदिति विध्येकवाक्यतया एकादश्या-मुपवासस्याहोरात्राभोजनात्मकस्य सिद्धौ एकादशीकाले शास्त्रार्थीभूत उदयगामिनि प्रक्रान्तस्य एकादश्या विशेषणत्वेनोपलक्षणत्वेन वाऽस्याहोरात्राभोजनस्य परिसमापनम् ।

नन्वेकादशीभोजननिवृत्तिरूपव्रतस्य नित्यत्वे —

यदिच्छेद्विष्णुसायुज्यं सुतान् सम्पदमात्मनः ।
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ॥

इत्यादिमूलगुणविधिवाक्येन एकादशीमुपवसेदित्युत्पत्तिविधिप्राप्तभोजनाभावोद्देश्येन विष्णुसायुज्यादिफलं विधीयते, अग्निहोत्रादिवत् । नन्वेवं काम्यत्वलाभे नित्यत्वकाम्यत्व

योर्विरोधानुपपत्तिः । न च काम्यत्वनित्यत्वयोर्विरोधाभावः, अकरणे प्रत्यवायतदभावयोर्विरोधित्वात्। किञ्च, काम्यस्य त्यक्तुं शक्यतया नित्यस्य त्यक्तुमशक्यतया नित्यत्वं काम्यत्वविरुद्धमिति सर्वसम्मतमिति चेन् मैवम्, खादिरो यूपो भवति इति वाक्येन क्रतुसाधनीभूतयूपोद्देश्येन खादिरत्वं विधीयते। अतः खादिरयूपस्य नित्यत्वं खादिरं वीर्यकामस्य कुर्वीतेत्यनेनोत्पत्तिविधि-प्राप्तखादिरयूपोद्देश्येन वीर्यफलकत्वविधायकवाक्येन दध्ना जुहोतीति वाक्यप्राप्तदधि करणकहोमोद्देश्येन इन्द्रियकामस्य जुहोतीत्यादिवाक्येनाग्निहोत्र इन्द्रिय-फलकत्वविधायकेनाग्निहोत्रस्य काम्यत्ववत् यूपस्यापि काम्यत्वं तथा प्रकृतेऽपि-नित्यत्वकाम्यत्वयोरविरोधः । न च तत्र यूपस्य क्रत्वर्थतया काम्यत्वमेव, अङ्गस्य प्रधानफलफलकत्वस्य सकलसम्मतत्वादिति वाच्यम्, एतद्वैषम्यस्याप्रयोजकत्वात्। प्रमाण-द्वयसमावेशमात्रस्य प्रयोजकत्वात्। तथा च जैमिनिः--एकस्योभयरूपत्वं संयोगपृथक्त्व-वदिति एकस्योभयरूपत्वं संयोगपृथक्त्ववद् विरुद्धम्। अपि चाग्निहोत्रं जुहुयात् स्वर्गकाम इति काम्याग्निहोत्रस्यैव यथा यावज्जीवमग्निहोत्रं जुहोतीत्यादौ जीव्यधिकारिकत्वेन नित्यताऽपि श्रूयते तथा प्रकृते काम्यत्वनित्यत्वयोरविरोधः। नहि तत्र कर्मभेदः, शब्दान्तरादिषट्प्रमाणीयविरहात्। तथाहि, शब्दान्तराभ्याससंख्यागुणप्रकरणनाम-धेयानामेव कर्मभेदकत्वम्। तत्र शब्दान्तरं, यथा यजति जुहोति तेषां लोके अर्थ भेदोऽस्ति तत्र शब्दान्तरस्यैव भेदकत्वम्। अभ्यासो यथा, दर्शपूर्णमासाङ्गयागस्थले इडो यजति समिधो यजतीत्यादौ यजतीत्यस्याभ्यास एवेडयागसमिद्यागयोर्भेदकः। लोकेऽर्थभेदानवगमादेकस्यैव वस्तुनः प्रकृते इडयागसमिद्यागे नाना नामेति न सन्देहः सम्भवति । इडो [यजति समिधो ?] यजतीत्यनयोर्वाक्ययोर्नानानामैकवस्तु-प्रतिपादकत्वे वैयर्थ्यादनुवादत्वप्रसक्तेः। संख्या यथा, सप्तदश प्राजापत्यान् पशूनाल-भेतेत्यादौ। अत्र विचार्य्यमधिकमन्यत्र। गुणो यथा, वैश्वदेव्यामिक्षा भवतीति श्रूयते। आमिक्षा खिरिसा इति प्रसिद्धा। तत्र श्रूयते, तप्ते पयसि दध्यानयति। तत्र वाजिभ्यो वाजिनं वाजिनं तज्जलम् ।

अत्राशयः—आमिक्षया वैश्वेदेवयागसम्पत्तौ तत्राकाङ्क्षाविरहात् वाजिन-द्रव्येण वाजिदेवताकयागान्तर एव द्रव्यस्वरूपकरणभेदाद्भेदः। कर्म्मणोरिति गुणानां समुच्चयवि[क]ल्पादिकल्पने बीजाभावात् । प्रकरणं, यथा मासमग्निहोत्रं जुहोति। अत्राग्निहोत्रपदप्रयोगेऽपि अग्निहोत्रप्रकरणभेदाद्यागपरत्वम्। नामभेदो, यथा त्रिवृद्धि ज्योतिर्विश्वज्योतिः सर्वज्योतिरिति नामभेदस्यैव भेदकत्वम्। अतएव **समयप्रदीपजीर्णो-**

द्वारे मधुसूदनठक्कुरोऽप्याह—जन्माष्टमीजयन्तीव्रते भिन्ने संज्ञाभेदादिति। नन्वग्निहोत्रं जुहोति स्वर्गकामः, यावज्जीवमग्निहोत्रं जुहोतीत्यादावपि अभ्यास एव भेदकोऽस्त्विति चेन्न। अत्र गुणविधायकत्वेनाभ्यासस्योपपत्तेरन्यप्रमाणस्याप्रसक्तेः। ननु यावज्जीवशब्दोऽयं पुरुषायुःपरिमितकालतात्पर्यकः अग्निहोत्रं जुहोतीत्युत्पत्तिविधिप्राप्ताग्निहोत्रोद्देश्येन स्वर्गफलकत्वविधायकेनाग्निहोत्रं जुहुयात् स्वर्गकाम इति काम्याग्निहोत्रविधायकवाक्येन प्राप्तफलाग्निहोत्रोद्देश्येन कृत्यपुरुषायुःपरिमितिकालिकत्वरूपो गुणो विधीयते।

नन्वधिकारान्तरबोधकः, पुरुषधर्माबोधकत्वात्। तथा च स्वर्गकामनया तावत्कालकरणे स्वर्गावाप्तिरिति चेन् मैवम्, जीवशब्दस्य प्राणधारणार्थकतया कालावाचित्वात्। प्राणधारणं पुरुषधर्म्म एवातः-स्वर्गकामनेव [प्राणधारण?] मप्यपरं निमित्तं तन्निमित्तो नित्यप्रयोगः। तेन यावज्जीवरूपनिमित्तिकत्वात् अहरहः कर्त्तव्यत्वं तस्य काम्यत्वेन कामनाकालमात्रकर्त्तव्यत्वमतोऽहरहःकर्त्तव्यत्वरूपनित्यत्वकाम्यत्वयोरेकत्र समावेशान्न विरोधः। तथा च कालभेदेन विष्णुपूजाया इव तदुभयोपपत्तेरिति भावः।

नन्वग्निहोत्ररूपकर्मणः स्वर्गकामनासत्त्वे कालभेदेन कृतस्य काम्यत्वं नित्यत्वं च नित्यविष्णुपूजानन्तरं काम्यविष्णुपूजावत् सम्भवति। प्रकृते च एकादश्युपवासव्रतकर्म्मणः षष्टिदण्डात्मककालकर्त्रोरभेदात् प्रयोगभेदः कथं स्यात्। तदभेदे नित्यत्वकाम्यत्वयोरनुपपत्तिरिति चेन्मैवम्, सकृदेवानुष्ठिते प्रयोगद्वयसिद्धेः। यथा श्राद्धादिनिमन्त्रितब्राह्मणकर्तृकसकृद्भोजनेन श्राद्धमैन्द्रं दधि भवत्यमावास्यायामग्नीषोमीयः पुरोडाशो भवत्यमावास्यायामित्याद्युत्पत्तिविधिप्राप्तमैन्द्राग्न्यमग्नीषोमीयादीष्टित्रयं दर्शपदवाच्ये आग्नेयाष्टकपालो भवति पौर्णमास्यामग्नीषोमीयः पुरोडाशो भवति पौर्णमास्यामुपांशुमन्तरा यजतीत्युत्पत्तिविधित्रयप्राप्तमाग्नेयमग्नीषोमीय उपांशुरिति इष्टित्रयं च प्रधानम्। तत्र इडो यजतीत्यादि प्राप्तं प्रयाजादिकमङ्गं तत्र सकृदनुष्ठितः प्रयाजादिराग्नेयत्रयोपकारकः तन्त्रेण द्वितीये ज्योतिष्टोमे सर्वासामिष्टीनां विनियोगो वर्त्तते। तत्राग्निषोमीयं पशुमालभेदित्यनेन विहितो यः पशुयागः स सान्नाय्यविकार इति हेतोरतिदेशप्राप्तप्रयाजादिरेकवारमनुष्ठित एव पशुयागाङ्गभूतायाः पशुपुरोडा-

शेष्ट्या इष्टित्वादतिदेशः प्राप्तोऽपि सर्वासामिष्टीनां दर्शपौर्णमासौ प्रकृतीति न्यायात् पुनर्न क्रियते। स एव पशुपुरोडाशस्याप्युपकारकः। प्रसङ्गेन यथा जामत्रर्थदत्तो दीपः प्राघुणिकाणामुपकारकः काम्यप्रसङ्गेन नित्यप्रयोगसिद्धिः,

काम्येन नित्यसिद्धिः स्यात् प्रसङ्गेनोभयात्मकः॥ इति।

नानाकर्मफलार्थेन सकृदेव कृतं यथा।

अङ्गमङ्गत्वमायाति तदा तन्त्रमुदीरितम्।

एकस्यार्थे कृतं कर्म सकृदेव यदा भवेत्।

नानाकर्म फलायानं [लं] प्रसङ्गः परिकीर्त्तितः॥

इत्यलमप्रकृतेन, प्रकृतमनुसरामः। उच्चैः ऋचा क्रियते त्रयो वेदा अजायन्त इत्यत्र सिद्धान्तस्यैव वेदो वेति न्यायपदेनोच्यते निबन्धिभिः। अत्र **देवनाथठक्कुराः**—

संक्रान्तेः पुण्यकालस्तु षोडशोभयतः कला [:]।

चन्द्रसूर्योपरागे तु यावद्दर्शनगोचरः॥

इत्यत्र तं न्यायसञ्चारं चक्रुः। तथाहि, नन्वत्र दृशेश्चाक्षुषशक्तत्वात् तत्काल एवाधिकारी भवेत् न तु मज्जनकालेऽपि। तथा च दर्शनविषयीभूतसूर्योपरागकालजीवित्वस्यैवाधिकारत्वादिति चेत् न, उपक्रमस्थदर्शनपदार्थानुरोधेन गोचरपदस्य तद्योग्यतापरत्वात्, वेदा वा प्रायदर्शनादिति न्यायात्तादर्थः, प्राये उपक्रमे वेदपददर्शनादुपसंहारेऽपि ऋक्पदादिकं वेदपरमेवोपक्रमानुरोधात्। तथाहि, त्रयो वेदा अजायन्त इत्युपक्रमस्थवेदपदेन वेदनाजनको विधिभाग उच्यते, तदनुरोधादुपसंहारेऽपि उच्चै ऋचा क्रियते उच्चैस्साम्ना उपांशु यजुषा उच्चैर्निगदेन इत्यत्र ऋक्यजुस्सामपदेऽपि विधिभागाभिधानम्, तस्य-करणत्वासम्भवात्। ऋगाद्याम्नातकार्यपराणि ऋगादिपदानि लक्षणाङ्गीकारात् निगदः सम्बोधनार्थः यज्ञः। न च वेदपदस्यैव ऋगादिपरत्वमिति वैपरीत्यमेवास्तु इति वाच्यम्, वेदपदस्य त्रय [?]मोपस्थितत्वेनार्थपरत्वात्। तदानीमनुपपत्त्यभावात् अजाधिकरणे च वक्ष्यते। तदेवमतिपीडनेनैव पललाघवसम्वलितमुपस्थितिलाघवमेव शरणमिति दिक्।

**नवीनवाचस्पतिमिश्रास्तु**—अत्र सूर्योपरागस्य निमित्तत्वप्रतिपादनात् ज्ञानस्यैव निमित्तत्वात् ज्ञानमात्रे प्राप्ते यावद्दर्शनगोचर इति वचनाच्चाक्षुषस्यैवेह निमित्तता चाक्षुषज्ञान एव दर्शनपदस्य मुख्यत्वात्।

न च नेक्षेतोद्यन्तमादित्यं नास्तं यान्तं कदाचन ।
नोपरक्तं न वारिस्थं न मध्यनभसो गतमिति ।

मनुवचनाद्दर्शनस्य निषेधात् प्रकृते दर्शनपदस्यावधारणमात्रपरत्वमिति वाच्यम् इदं शास्त्रप्राप्तदर्शनं विहाय मनुवचनं रागप्राप्तदर्शननिषेधकम् अतो न विरोधः। न निशि स्नायात् राहुदर्शने स्नायादित्यत्रेव चाक्षुषम् स्नानादिकर्तुरेव लाघवात्। एवञ्च स्पष्टेऽपि ग्रासे अपश्यतो नाधिकारः। न चैवं मज्जनकाले नोपरागप्रत्यक्षमतः स्नानकाले तस्य स्नातः पुण्यकालो न स्यादिति वाच्यम्, उपक्रमस्थदर्शनपदानुरोधेन शेषस्थगोचरपदस्य तद्योग्यतालक्षकत्वात्। वेदो वेत्यत्र तथैव सिद्धान्तितत्वात्। योग्यता च दर्शनबाधकमानाभावरूपा। सा च मेघगुल्मादिव्यवहितेऽप्यस्ति। तत्र मेघाद्यपसरणेन ग्रासदर्शनस्य सम्भवात्। तत्र मेघाद्यावरणेन ग्रासदर्शनाभावस्यानुमानायोगात्। दोषातनरविग्रहदिवातनशशिग्रहयोर्दोषातनत्वेन दर्शनाभावोऽनुमातुं शक्यत इति न तत्र दर्शनयोग्यता, तेनैतादृशयोग्यतालिङ्गितो ग्रासो यावदनुवर्त्तते तावद्दर्शनानन्तरं पुण्यकाल इति सिद्धम्।

यत्तु प्रयत्नानपनेयप्रतिबन्धकविरहो योग्यतेति प्राचीनैर्ल्लिखितं तदप्ययुक्तमेवेति, अन्यथादर्शनानन्तरं मेघच्छन्ने ग्रासे, तन्मते, अनधिकारः स्यात्। अतएव योग्यताश्रयणेन दोषातनरविग्रहदिवातनशशिग्रहयोर्न्निरास इति। योग्यता च यदि ग्रासं कोऽपि पश्यति तदा जायत इति तल्लिखनं सङ्गच्छते। मेघच्छन्ने कस्यचिद्दर्शनसम्भवे तत्रार्थतो योग्यताया उद्गमादित्याहुः, तन्न, बाधकमानाभावे प्रतियोगिविधया दिवातनत्वादेर्द्दर्शनानन्तर्य्यादिर्न्निवेशे गौरवात्। न च तथा सति योग्यतैवानिर्वाच्या। दिनवृत्तित्वे सति विजातीयपरिमाणवत्वम् सूर्य्योपरागयोग्यता रात्रिवृत्तित्वे सति विजातीयपरिमाणवत्वं चन्द्रोपरागयोग्यता, एवं मेघच्छन्नेऽपि काल एव पुण्यस्य एतादृशदर्शनयोग्यकालजीवित्वस्याधिकारत्व आयाते मेघच्छन्नेऽप्यधिकार एव तत्कालजीविनाम्। न चैतादृशकालजीवित्वं वर्षान्तरवर्त्तिपुरुषेऽप्यस्ति, एतद्वर्षीयोपरागे वर्षान्तरवर्त्तिपुरुषेऽप्यधिकारापत्तिरिति वाच्यम्, वर्षभेदेन योग्यताया भेदात्।

किञ्चोपक्रमस्थदर्शनपदस्य मुख्यतार्थता गोचरपदस्य योग्यतार्थकता वेदो वेति न्यायात्। अतो दर्शनान्तरदर्शनयोग्यकालजीवित्वमधिकार इत्यपि न साधु, दर्शनानन्तर्भावस्य राहुदर्शने स्नायादिति विधौ दर्शनपदस्य मुख्यार्थत्वं विना कर्त्तुमशक्यत्वात्। न चोपक्रमानुरोधादत्र मुख्यत्वं सम्भवति, नोपरक्तं न वारिस्थमित्यादिनिषेधविरोधात्

न च न निशि स्नायादित्यादौ विहितस्नानेतरस्नानवत् तत्रापि राहुदर्शने स्नाया-दित्यादिविहितराहुदर्शनेतरदर्शनस्यैव निषेध इति वाच्यम् तादृशविधौ स्नानस्य विधेयत्वे तथा सम्भवेऽपि प्रकृते दर्शनोद्देश्यत्वे तथा सम्भवात्। न चात्र दर्शनस्यापि विधेयत्वमस्तु चाण्डालस्पर्शे स्नायादित्यादौ चाण्डालस्पर्शवन्निमित्तत्वव्याघातापत्तेः।

देशः कालो निमित्तञ्च संस्कार्य्यकर्म्मणः फलम्।
इति मीमांसकाः प्राहुरनुपादेयपञ्चकम्॥ इति।

किञ्च, यदि दर्शनं स्यात्तदा स्नायादिति वाक्यभेदकल्पनाप्रसक्तिरपि स्यात्, तस्मादवधारणमेव दर्शनपदार्थः। नेह वेदो वेति न्यायप्रसक्तिः। तच्चावधारणं चक्षुः-संयोगप्रयोज्यज्ञानं परम्परयाऽपतज्ज्ञानजन्यं ज्ञानं वेत्यन्यदेतत्। कर्म्मण्यत्र प्रवृत्तिनिवृत्ति-रूपे वोध्ये अधिकं प्रवर्त्तनाविवेचनावसरे विवेचयिष्ये।

ननु— अथ भाद्रपदे मासि कृष्णाष्टम्यां कलौ युगे।
अष्टाविंशतिमे जातः कृष्णोऽसौ देवकीसुतः।
भारावतरणार्थाय क्षत्रियाणां क्षयाय च॥
तस्मात् स तत्र संपूज्यो यशोदा देवकी तथा।
गन्धैर्माल्यैस्तथा धूपैर्य्यवगोरससम्भवैः॥
सगोरसैर्भक्ष्यभोज्यैः फलैश्च विविधैः पृथक्।
रात्रौ प्रजागरः कार्य्यो नृत्यगीतसमाकुलः॥
अरुणोदयवेलायां नवम्याञ्च ततः स्त्रियः।
रक्तवस्त्रावृताः सर्वा रक्तमाल्यैरलंकृताः॥
नयन्ति प्रतिवाद्यैषां [?] नानाविभवविस्तराः।
नदीतीरं शुभं रम्यं विविक्तं वा महासरः॥
तत्र स्नानं प्रकुर्वन्ति स्नापयन्ति च ताः स्त्रियः।
ततः प्रविश्य च गृहं यवान्नं भुञ्जते च ताः॥
युक्तमिक्षुविकारैश्च मध्वाज्यमरिचैः सह।

इत्यादौ अक्ताधिकरणन्यायेन भुञ्जीत ता इति पारणायाः स्त्रीषूपसंहारात् स तत्र सम्पूज्य इत्यादावुपक्रमे सामान्यकल्पने लाघवेन प्राप्तस्य सामान्यतोऽधिकारिवाच-

कपदस्य विशेषेण क्षणाविशेषाधिकारिकल्पनातो वेदो वेति न्यायविरोधः। न चाक्ताधिकरणे उपसंहारानुरोधाभावः। तत्र तदनुरोधस्य सकलसिद्धान्तिसिद्धत्वात्। तथाहि 'अक्ताः शर्करा जुहोति', इत्युपक्रम्य 'तेजो वै घृतमित्युपसंहारः'। तेनाक्ता इत्यनेन प्राप्‌ स्याञ्जनसाधनद्रव्यस्योपसंहारानुरोधात् घृतत्वं प्राप्यते तथा पारणायाः स्त्रीषूपसंहारानुरोधात् सामान्यतः प्राप्ताधिकारस्थले अधिकारविशेषः कल्प्यते। तथा चोपसंहारानुरोधस्योपक्रमस्य दुर्वारत्वादिति चेन्मैवं अक्ता इत्यादौ "तेजो वै घृतमिति" घृतस्तुतेरन्यथानुपपत्त्या अञ्जनसाधनत्वलाभः। "यवान्नं भुञ्जीत च ता" इत्यादौ ता उद्दिश्य यवान्नभक्षणरूपपारणाविधानात्। अन्यतः प्राप्तस्यैवोद्देश्यत्वात् तत्प्रापकश्च सामान्यतोऽधिकारिप्रापक उपक्रम एव। न चोपक्रमस्य सामान्यतो अधिकारिप्रापकत्वे मानाभावः। आक्षेपस्यासति बाधके सामान्यप्रापकत्वात्। सामान्यकल्पनायां लाघवाच्च। अतएव स्त्रीपुंसाधिकारिकं व्रतमिदमिति **समयप्रदीपरत्नाकरादयः**। किञ्च "नरो वा यदि वा नारीत्यस्यैवोपक्रमत्वात्" सामान्याधिकारिकं व्रतमिदमिति दिक्।

ननु याजुर्वेदिके आधानकर्म्मणि सामान्याङ्गत्वेन श्रुतानि वावयन्ती यादीनि तेषु सामवैदिकः स्वरः पठनीयो याजुर्वेदिको वा। ननु स्ववेदनिबन्धनत्वात् शीघ्रोपस्थितिकत्वात् सामवैदिक एव स्वरः पठनीयः। न च प्रधानविधिनिबन्धनो याजुर्वेदिक एव स्वरो भवितुमर्हतीति वाच्यं तस्य प्रधानैकवाक्यतासापेक्षत्वेन बिलम्बोपस्थितिकत्वादिति चेत् न साङ्गस्यैवाधानस्य यजुर्वेदेन विधानात्। अङ्गेषु विलम्बोपस्थितेरप्युपांशु स्वरो बलीयान्, प्रधानाश्रितत्वात्। अतस्तेषु याजुर्वेदिक एवोपांशुस्वर इति **भाष्यकारः**।

याजुर्वेदिक आधाने वावयन्तीय सामसु।
स्वरस्तूपांशुरेव स्यात् कर्म्मवेदनिबन्धनः॥
यथा साम्नि स्वरस्त्वेष कर्म्मवेदनिबन्धनः।
तथा मन्त्रेऽपि पाठः स्यान्मन्त्रवेदनिबन्धनः॥

यत्रैकमेव कर्म्मानेकेषु वेदेषु श्रुतं तत्र क्वोत्पत्तिः क्व च तदनुवादेन गुणान्तरविधानार्थं श्रवणमिति जिज्ञासायाम् उच्यते। यत्राङ्गबाहुल्यं तत्रोत्पत्तिः। सेवकबाहुल्येन राजावस्थाननिर्णयवत्। वस्तुतस्तु कर्म्मस्वरूपपरिचायकसद्रव्यदेवता-

सकलाम्नानस्यैव तन्निर्णायकत्वात् । तथा च यत्र द्रव्यदेवताद्याम्नानं तत्रोत्पत्तिः । ननु यत्र एकस्मिन् वेदे द्रव्याम्नानमपरस्मिन् वेदे देवताम्नानं, तत्र क्व उत्पत्तिः क्वानुवादः विनिगमनाविरहादुभयत्रोत्पत्तिमत्वे कर्म्मभेदापत्तिः । न च विनिगमनाविरहादुभयत्रानुवाद एवेति वाच्यम् । उत्पत्तिं विना अनुवादस्यासम्भवादिति चेत् न देवताम्नानस्यैवोत्पत्तिनिर्णायकत्वात् । न च देवतायाः कर्म्मानिष्पादकत्वेन वहिरङ्गत्वाद्दौर्वल्यं द्रव्यस्यान्तरङ्गत्वाद्वलवत्त्वेनोत्पत्तिनिर्णायकत्वमिति वाच्यं ? देवातायाष्कर्म्मं व्यभिचारितया तदाम्नानस्यैव निर्णायकत्वात् । न च द्रव्यमव्यभिचारि अनुकल्प विकल्पयोरपि सम्भवात् । न च तत्र तत्रानुवादे प्रयोजनाभावः "दध्ना जुहोती"-त्यादिवदविरोधिगुणान्तरविधायकत्वात् । अथ विरोधिगुणान्तरविधाने का गतिरिति चेत् तत्रोभयत्रोत्पत्तिरेव कर्मणोर्भेदात् विरोधिगुणस्य कर्म्मभेदकत्वात् । यथा-दिवारात्रिरूपाङ्गभेदाज्जयन्तीकृष्णाष्टम्योर्भेदः । यत्र च कस्यचिदपि विरोधिगुणस्याभिधानन्नास्ति तत्राप्यभ्यासाद्यन्यतमसत्वे कर्म्मणोर्भेद एव । न च शाखान्तराधिकरणन्यायेन सत्यपि सर्वेषामुत्पत्तिपरत्वे कर्म्मैकत्वं तद्वदिहाप्यध्येतृभेदाभावात् । तस्माद्यत्र देवताम्नानं तत्रैवोत्पत्तिः, तद्भेदनिवन्धन एव स्वर इति सिद्धान्तः । नन्वभ्यासनिवन्धन-एव कर्मभेदोऽस्तु तथा चोभयत्रोत्पत्तित्वे वाधकाभाव इति चेत्, न, अभ्यासस्य कर्म्मभेदकत्वे भिन्नविषयकत्वात् । तथाहि शब्दान्तराभ्यासगुणप्रकरणनामधेयानामेव कर्मभेदकत्वम् । अतएव जन्माष्टमीजयन्तीव्रते भिन्ने, संज्ञाभेदादिति **जीर्णोद्धारकृद्**-व्याह ।

**इति मीमांसारसपल्वले वाक्यतरङ्गः ।**

## [प्रकरणनिरूपणम्]

अथ प्रकरणं निरूप्यते । ननु किमिदन्नाम प्रकरणम् ? अथ सन्निधा[ना]म्नानंप्रकरणं तदेवाङ्गताग्राहकम् । तथा च यदङ्गं यदाम्नानसन्निधाम[ना]नातं तत्तदङ्गमिति व्याप्तिः यवागूवत् । तथाहि "अग्निहोत्रं जुहोति" "यवागुम्पचति" इत्याम्नानां समव्यवधानेनैवास्त्यतो यवागूपाकस्याग्निहोत्राङ्गत्वमेवेति चेत्, न, दर्शपौर्णमाससन्निधानाम्नातगोदोहादेरपि तदङ्गत्वापत्तेः । तत्रैव व्यभिचारान्नायं नियमः । साकांक्षत्वमपि विशेषणमस्तु तत्र कर्म्मनिष्ठमङ्गं निरूपितम् । तथा च प्रधानाकांक्षत्वे सति सन्निधिपाठः प्रकरणशब्दार्थः, गोदोहवारणाय सत्यन्तं गोदोहस्य सन्निधिपाठेऽपि न प्रधानगताकांक्षाविषयत्वम् । प्रधानयोर्दर्शपौर्णमासयोरितिकर्त्तव्यताकांक्षाविरहादिति चेन्न, उपहोमा-

देरपि तथापत्तेः । प्रधानस्य दर्शपौर्णमासादेरितिकर्तव्यताकांक्षातत्सन्निधिपाठयोस्तत्र सत्त्वात् । अथोभयाकांक्षत्वविशिष्टं तत् । तथा च प्रधानगताकांक्षासहकृताङ्गगताकांक्षावत्त्वे सति सन्निधिपाठवत्त्वम् तत्, यवागूपाके तच्चास्ति । अग्निहोत्रं कथं जुहुयादिति प्रधानगताकांक्षासहकृता यवागूपाकस्य किं प्रयोजनमिति यवागूपाकगता या आकांक्षा तद्विशिष्टत्वे सति सन्निधिपाठस्य सत्वात्, प्राकृताङ्गे विकृतेः प्रकरणविषयत्ववारणाय सन्निधिपाठस्य गोदोहने दर्शपौर्णमासाङ्गत्ववारणाय प्रधानाकांक्षाया उपहोमवारणाय प्रयोजनाकांक्षाया विवक्षणादिति चेत् न, सिद्धरूपाणाम्मन्त्राणामपि प्रकरणविषयत्वापत्तेः । मन्त्रस्य प्रकाश्याकांक्षायाः कर्म्मणो मन्त्राकांक्षायाश्च सत्त्वात् प्रयाजादीनां प्रधानाकांक्षितत्वेन प्रकरणाविषयत्वापत्तेः । ननु दर्शपौर्णमासयोः प्रकारान्तरेण प्रयोजनाकांक्षितत्वेऽपीतिकर्त्तव्यतात्वेन तदाकांक्षोपपत्तेर्युक्तं प्रकरणम् । ननु किमिदमितिकर्त्तव्यतात्वम्, न तावत् फले प्रधानापूर्वे वा जनकत्वं प्राधान्यापत्तेः । प्रयाजादेर्विकृतावतिदेशवदाग्नेयादेरपि अतिदेशापत्तेश्च । उक्तरीत्याग्नेयादेरपीतिकर्त्तव्यतात्वापातात् । नापि करणजनकत्वं प्रयाजादिषु बाधादिति चेत् न, शक्तिविशेषस्यैवेतिकर्त्तव्यतात्वात् । तथा च सन्निहितस्य फलवतो अनवगताङ्गताकपदार्थविषयेतिकर्त्तव्यतात्वेनापेक्षणम् । तथा च प्रमाणान्तरावगतसन्निहितफलवन्निरूपिताङ्गत्वाभाववत्वे सति इतिकर्त्तव्यत्वप्रकारेणाकांक्षमाणत्वं श्रुत्यादित्रयविनियुक्तस्य प्रोक्षणादेः प्रकरणविषयत्ववारणायाद्यं विशेषणं प्रयाजादौ ज्योतिष्टोमाद्यङ्गत्ववारणाय तत्सन्निहितेति गोदोहवारणाय विशेष्यदलम् । अथवाकांक्षातिरिक्तप्रमाणावगताङ्गत्वाभाववत्त्वे सति फलवत्कर्म्मेतिकर्त्तव्यतात्वेनाकांक्षमाणत्वं फलवत्कर्म सन्निध्याम्नातत्वे सतीतिकर्त्तव्यतात्वेनाकांक्षमाणत्वं वा लक्षणम् । अनुयाजाद्यङ्गत्वस्य प्रयाजादौ वारणाय फलवदिति । प्रयाजादौ प्रमाणान्तरावगताङ्गत्वाभाववत्त्वे सत्यपि प्रयाजसन्निध्याम्नातफलवदनुयाजेति कर्त्तव्यतात्वे साकांक्षमाणत्वविरहादतिव्याप्तिः । अनुयाजस्य फलवत्वाभावादितिकर्त्तव्यतात्वेनाकांक्षाया अङ्गमात्रे विषयत्वमभ्युपेयते । अन्यथा आकांक्षातिरिक्तप्रमाणावगताङ्गत्वाभाववत्वे सति प्रयोजनसाकांक्षत्वविशिष्टसुसन्निध्याम्नातफलवद्यत्कर्मेतिकर्त्तव्यतात्वेनाकांक्षमाणत्वम् । यत्र तत्कर्म्माङ्गत्वं तत्रेति सामान्यतो व्याप्तौ ज्योतिष्टोमादावितिकर्त्तव्यतात्वाभावादेव तादृशेति कर्त्तव्यतात्वेनाकांक्षमाणत्वाभावात् । व्यभिचाराभावेन तद्वारणाय सन्निहिता-

दिपदवैयर्थ्यप्रसङ्गः । सिद्धरूपमन्त्रस्य लिङ्गविनियुक्तस्य प्रकरणाविषयत्वसिद्ध्यर्थ-मितिकर्तव्यतात्वेनेति विशेषणम् । तथा च केन मन्त्रेण एतत्कर्मदेवताः प्रकाश्या इत्या-कारिकाया सन्निधानाम्नातफलवत्कर्म्माकांक्षाया एतस्य मन्त्रस्य का देवता प्रकाश्येति प्रयोजनाकांक्षाविशिष्टायाः तादृशमन्त्रादौ सत्वेपि न प्रकरणविषयत्वमितिकर्त्तव्यता-त्वविरहात् इतिकर्त्तव्यतात्वं करणानुग्राहकत्वं तच्च करणतासम्पादकत्वम् । तथाहि अशक्तस्य करणत्वायोगेन कारणनिष्ठा शक्तिरस्तीति निर्विवादम् । सा च कारणतावच्छे-दिका कारणतारूपा वेत्यन्यदेतत् । तदत्र सामग्रीए शक्तिसम्पादिकेति सामग्रीए इति-कर्त्तव्यता । सा चासिद्धयजनादिक्रियारूपा, तदपेक्षैवेति तत्कर्त्तव्यतात्वेनाकांक्षा । तया च सन्निहितप्रयाजादेरङ्गत्वबोधः, प्रयाजादेस्तत् सामग्रीत्वात् । सिद्धरूपद्रव्यस्य व्यापा-रावेशेन विना तत्सामग्रीत्वासम्भवात् । तत्सामग्रीत्वेनाकांक्षमाणत्वाभावात्तथा चासिद्ध-यजनादिक्रियैवतद्व्यापारस्तस्यैव सामग्रीत्वादत्र प्रधानगतेतिकर्त्तव्यताकांक्षासहितया अङ्गगतप्रयोजनाकांक्षाया प्रधानवाक्येन सहाङ्गवाक्यमेकवाक्यतापन्नमिति वाक्यैकवाक्यता कल्पना । तथा च प्रधानाङ्गयोः परस्परान्वयबोधान्यथानुपपत्या तयोर्य्योग्यताकल्पना तथा च योग्यताघटकसम्बन्धवाचकरूपश्रुतिकल्पना तया च श्रुत्या इतिकर्त्तव्यतात्वेनाङ्ग-बोधनात् । तथाहि "दर्शपौर्णमासाभ्यां यजेदिति" वाक्योपात्तदर्शादौ "समिधो यजतीति" वाक्योपात्तसमिद्यागादावितिकर्त्तव्यताकांक्षासहिता प्रयोजनाकांक्षा तिष्ठति । तस्याः प्रतिसन्धानानन्तरं वाक्यद्वयमिदमेकवाक्यतापन्नमिति प्रतिसन्धानम् । अनन्तरं स्वस्ववाक्य समाप्तवाक्यार्थयोस्तयोर्य्योग्यताघटकसम्बन्धकल्पनम् । अनन्तरं च तादृशसम्बन्ध बोधकं समिधो यजति । इत्यञ्च दर्शपौर्णमासाभ्यां यजेतेतिश्रुतेरितिकर्त्तव्यतात्वं वद न्तीत्थंपदरूपश्रुतिकल्पना । तदयम्भावः समिधो यजतीत्थन्दर्शपौर्णमासाभ्यां स्वर्गकामो यजेतेति महावाक्यम् । तस्मात् समिदादीतिकर्त्तव्यताकस्वर्गभाव्यकस्तुत्यादीतिकर्त्त-व्यताकव्यापारो वेदवृत्तिरित्येवंविधवाक्यार्थबोधः सम्भवति । प्रयाजादीनामपि उक्तशक्तिजनकत्वेन भावनायामन्वयः । तस्मात् सिद्धं प्रकरणं नाम चतुर्थं प्रमाणम् ।

पार्थसारथिमिश्राः असत्त्वगृहीतस्यापि कर्म्मादेः संयोगविभागजनकत्वदर्शना-न्नेदं प्रकरणम्, अपि तु व्यापारसामान्यस्याख्यातार्थत्वमङ्गीकृत्य तद्विशेषापेक्षैव इतिकर्त्त-व्यतापेक्षा, तयैव च प्रयाजादीनां तत्वेनान्वय इति । तथा च व्यापारविशेषत्वेनाकांक्ष-

माणत्वं प्रकरणमित्युक्तमित्याहुः । तन्न, तथात्वे निरुक्तप्रकरणस्य तद्घटितार्थबोधकत्वानुपपत्तेः । प्रयाजादेर्भावनात्वे तस्यैव फलसम्बन्धानापत्तेः । अस्मन्मते तु यत्नस्यैव भावनात्वात्, तस्य च यागजनकत्वेनैव कृतार्थत्वान्न तदापत्तिरिति वैषम्यम् । किञ्चैवं प्रधानस्य स्वतो निराकांक्षस्यान्यतराकांक्षयैव प्रयाजाद्यङ्गत्वापत्तिः, विकृतौ भावनाया विशेषापेक्षायामक्लृप्तोपकारैरपि सन्निहितैरुपहोमे निराकांक्षत्वोपपत्तेः । नातिदेशकल्पनापत्तिरिति दिक् ।

अत्र **गोविन्दठक्कुराः** लब्धवाक्यभावानां पदानां कार्यान्तरवशाद् वाक्यान्तरेण सम्बन्धः स चाकांक्षापर्यवसितः । अर्थैक्यादेकं वाक्यं साकांक्षं चेद्विभागः स्यादिति सूत्रात् सैव प्रकरणं दर्शपौर्णमासाभ्यां यजेत् इति विधौ कथंभावाकांक्षायां "इडो यजति", "बर्हिर्य्यजति" "स्वाहाकारं यजति", "तनूनपातं यजतीत्यनेन" पञ्चयागानामङ्गत्वबोधनं पाठवशाच्छेषत्वलाभात् परस्परमङ्गाङ्गिसाकांक्षत्वात्, फलान्तराश्रुतत्वात् । दग्धाश्वरथवत् यथा एकस्य रथो दग्ध अपरस्याश्व इति द्वयोः साकांक्षत्वादुभाभ्यामेवार्थसज्जीकरणमिति प्राहुः ।

आकांक्षान्यप्रकारेण ज्ञाताङ्गत्वं विना कृतम् ।
साकांक्षं फलवत् कर्म्म सन्निधाने च कीर्त्तितम् ।
इति कर्त्तव्यतात्वेन फलवत्कर्म्मणेष्टितम् ।
क्रियारूपं यदङ्गं स्यात्तत्स्यात् प्रकरणाहितम् ।

इति मीमांसारसपल्वले **प्रकरणतरङ्गः** ।

## [स्थाननिरूपणम्]

स्थानस्याङ्गत्वे पञ्चमं प्रमाणं, तदेव क्रम इति कथ्यते । स एव च सादेश्यापरपर्य्यायः । तच्च द्विविधम्-पाठसादेश्यम् अनुष्ठानसादेश्यम् । तत्राद्यं द्विविधं यथाक्रमं पाठः, सन्निधौ पाठः । त्रयमपीदम् उभयाकांक्षास्थले अन्यतराकांक्षास्थले तत्राद्ययोराद्यं काम्ये याज्यानुवाक्यानां मन्त्राणां कामेष्टयङ्गत्वं द्वितीयं सानाय्यपात्र**शुन्धनविधौ** "शुन्धध्वमिति" मन्त्रस्याङ्गत्वं ग्राहयति । अत्र यद्यप्येतेषां लिंगादिप्रमाणेनैव विनियोगात् क्रमादीनां क्वचिदपूर्वसाधनत्वलक्षणतात्पर्यग्राहकत्वमात्रं नाङ्गत्वप्रमापकत्वं, तथापि एतदुदाहरण**ङ्कौस्तुभे** विवेचितमिति **खण्डदेवभट्टाः** । वस्तुतस्तु आग्नेयाग्नीषोमीयोपांशुयागाः क्रमेण ब्राह्मणभागे पठिताः, मन्त्रभागे क्रमेणानुमन्त्रणमन्त्राः पठिताः । तत्राग्नेयवैष्णवयोर्द्वयोर्ल्लिङ्गेनैव विनियोग-

सिद्धिः । "दर्वीरसीति" मन्त्रस्य न लिङ्गेन विनियोगः, किन्तु यस्मिन् देशे ब्राह्मणः पठितः तस्मिन् देशे मन्त्रभागे अस्य पाठ इति क्रमादुपांशुयागानुमन्त्रणे अस्य नियोगः। अत्र पाठमात्रं नाङ्गताग्राहकं किन्तु पाठेनाकांक्षा उत्थाप्यते। अनेन मन्त्रेण किं कार्य्यं, यागः केन मन्त्रेणानुमन्त्रणीय, इत्याकारा तादृशाकांक्षाद्वारा पूर्वोक्तरीत्या श्रुतिं कल्पयित्वा अङ्गतां ग्राहयति। प्राञ्चस्तु तुल्यदेशपाठानुष्ठानान्यतरकत्वं स्थानम् अङ्गं ह्यङ्गिनमुपकर्त्तुंन्तत् सादेश्यमपेक्षते। तथा च यत् समानदेशतया गद्वगतं तदङ्गमेव तद्विज्ञायते। अन्यथा अन्याङ्गत्वे ततसादेश्यकल्पनागौरवात्। तत्र पाठसादेश्यं "दर्वीरिसि" "दर्वो भूयासम्" इति मन्त्रस्योपांशुयागे विनियोजकम्, आग्नेयाग्नीषोमीययोश्च विनियोगो न, स्थानात्। तथाहि ब्राह्मणे प्रथममग्नीषोमीयो विहितः, पश्चादाग्नेयः मन्त्रभागे मन्त्रक्रमस्तु प्रथममाग्नेयस्य ततो अग्नीषोमीयस्य। तेन स्थानादाग्नेय मन्त्रस्याग्नीषोमीयार्थत्वे प्राप्ते बलवता लिङ्गेन तद्बोधात्, आग्नेयार्थत्वम्, ततस्तु अतस्तदुभयमध्यपठितस्योपांशुयागस्य ब्राह्मणे मन्त्रे "दर्वीरसीति" मन्त्रस्य तदुभयमन्त्रमध्य पठितस्योपांशुयागे विनियोजकस्थानमित्याहुः।

अनुष्ठानसादेश्यञ्च अग्नीषोमीयपशौ पशुधर्माणाम्। तथाहि अग्नीषोमीये पशौ श्रुतम् "यूपं परिव्ययत्युरसनेति" तद्यूपे पशुं बध्नातीति विहितिपशुवन्धनसाधनयूपार्थं त्रिवृद् भवति, दर्भमयी भवति, व्याममात्रा भवतीति रसना। तद्धर्म्माश्च सर्वथैतत् प्रधानयागपूर्वदिनानुष्ठेयाग्नीषोमीयपश्वर्थं प्रधानयागपूर्वदिन एवानुष्ठेया अनुष्ठानसादेश्यात्। अतएव प्रधानयागदिनानुष्ठेयसवनीयपशावतिदेशाद्गच्छन्ति।

इति मीमांसारसपल्वले स्थानतरङ्गः।

**[समाख्या निरूपणम्]**

अथ समाख्या निरूप्यते। समाख्या यौगिकी संज्ञा। सा च द्विविधा-वैदिकी लौकिकी च। तत्राद्या वेदविहितपदार्थे, होत्राध्वर्य्यादिसमाख्या याज्ञिकैः प्रयुज्यते। साप्यङ्गप्रमाणन्तया हि-यजुर्वेदीय अध्वर्य्यं रूढ़सा ता सामवेदी होता ऋग्वेदी भवति। तत्र ऋग्वेदादिविहितकर्म्मकाण्डे आध्वर्य्यहौत्रादिसमाख्या याज्ञिकैः प्रयुज्यन्ते। तेन ऋग्वेदविहितकर्म्मणामध्वर्य्युकर्तृकत्वं समाख्यया लभ्यते। ननु अत्र कृत्प्रत्ययस्य सम्बन्धमात्रमर्थः अङ्गाङ्गिभाव बोधने असामर्थ्यादिति चेत्, न, प्रकृते कृत्प्रत्ययस्याङ्गाङ्गिभावबोधकत्वात्। तथाहि सर्वत्र क्लृप्तावयवशक्तिकं द्विविधं पदं प्रकृतविधौ

वाक्यार्थान्वय्यर्थकं, तद्भिन्नञ्च। तत्राद्यं "नैर्म्मन्थ्येनेष्टकाः पचन्ति", "प्रोक्षिताभ्यामुद्वृष[ख]लमुश[स]लाभ्यामवहन्तीत्यादौ" निर्म्मन्थ्य प्रोक्षित पदादिभिः वाक्येनैव निर्म्मन्थनप्रोक्षणादीनां पाकाद्यङ्गत्वं वोध्यते न समाख्यया। द्वितीयं तु "आध्वर्य्यवमधीते" इत्यादौ। तथाहि आध्वर्य्यवमध्वर्य्युकर्त्तृकं काण्डमेवं होत्रमपि काण्डे अध्वर्य्युकर्त्तृकत्वं तत्काण्डप्रतिपाद्यकर्म्मणामध्वर्य्युकर्त्तव्यत्वं चम्यते अनेन चमसः सोमादिभक्षणपात्रमिति यावत्। एवं सोमभक्षणकर्त्तुः होतृचमस इति नाम। तथा चाध्वर्य्युकर्त्तव्यकर्म्मं प्रतिपादकत्वाश्रयकृदर्थः। तस्मा"दाध्वर्य्यवमधीतेइत्यादौ अध्ययनभावनायां भाव्यत्वेन विशेष्यस्य काण्डस्यान्वये समाख्याया अनुपयोगेऽपि काण्डांशमात्रे अध्वर्य्युकर्तृकत्वादेरन्वये समाख्याया उपयोगः। तेन ऋग्वेदविहितकर्म्माध्वर्य्योरङ्गाङ्गिभावः समाख्यानिक एवेति सिद्धम्।

ननु समाख्यया प्रकृतिप्रत्ययार्थाध्वर्य्यकर्त्तव्यकर्म्मप्रतिपादकत्वरूपसम्वन्धवोधने अध्वर्युतत्कर्म्मणोरङ्गाङ्गिभाववोधाय श्रुतिकल्पनावैयर्थ्यम्? न चेष्टापत्तिरेव, तद्वैयर्थ्ये पारदौर्वल्यानुपपत्तिरूपवर्णनस्य सौत्रस्यासङ्गतेरिति चेत्? कृता सम्बन्धत्वेनाङ्गाङ्गिभावस्य वोधनेऽपि विशेषतस्तद्वोधाय प्रकरणादिकल्पनात्। वस्तुतस्तु अन्वाधानादिवाक्यस्या"ध्वर्यु वृणीतेति" वाक्यस्य चैकवाक्यतासम्पादकपदकल्पनस्थले प्रकरणादिकल्पकत्वं समाख्यायाः। तथाहि "अध्वर्य्युं वृणीत" इति वाक्यमेकत्रापरत्रा"ग्नीनन्वादधातीति" वाक्यं श्रुतमस्ति। तयोर्वाक्यैकवाक्यतापन्नं "यमध्वर्य्युं वृणीते", "योऽग्नीनन्वादधातीति" च वाक्यं श्रुतिकल्पनारूपं, तत्रेयं प्रक्रिया। प्रथमं तयोरुक्त वाक्ययोः सन्निधिपठितत्वकल्पनं, तदेव स्थानम्। सन्निधानपाठमात्रस्याङ्गताग्राहकत्वाभावेनाग्न्याधानस्य कर्त्राकांक्षाकल्पनं, तदेव प्रकरणम्। तयोर्वाक्यैकवाक्यतापन्न, महावाक्यैकदेशत्वरूपवाक्यकल्पनम्। अनन्तरम् अध्वर्य्युनिष्ठाग्न्याधानयोग्यतारूपलिङ्गकल्पना। अनन्तरम् एकवाक्यतासम्पादकपदरूपवाक्यकल्पनम्। "तेनाध्वर्य्युं वृणीतेति" वाक्यस्याग्नीनन्वादधातीतिवाक्यसन्निधिपठितत्वरूपक्रमकल्पने आध्वर्य्यवादि समाख्याया एव वीजत्वम्। यतः समाख्यया अग्न्याधाने अध्वर्य्युकर्त्तृकत्वं प्रतीतं तत एव सन्निधिकल्पनमिति सिद्धं षष्ठं प्रमाणं समाख्या इति।

इति मीमांसारसपल्वले समाख्यातरङ्गः।

[विरोधे बलाबलनिरूपणम्]

एवं षट्प्रमाणेषु निरूपितेषु सम्प्रति विरोधे बलाबलं निरूप्यते। विरोधश्च एकस्याङ्गस्य प्रधानद्वयाङ्गताबोधकप्रमाणद्वयसत्वे एकस्य प्रधानस्याङ्गद्वयबोधकप्रमाणद्वयसत्वे। तत्राद्यमैन्द्रमन्त्रस्य गार्हपत्याङ्गत्वे श्रुतिरिन्द्राङ्गत्वे लिङ्गम्। द्वितीयं तु गार्हपत्यरूपप्रधाने ऐन्द्रमन्त्रस्याङ्गताबोधिका श्रुतिः, गार्हपत्यमन्त्रस्याङ्गताबोधकं लिङ्गं प्रमाणमस्ति। अथ यद्येकस्य प्रधानस्याङ्गद्वयबोधकप्रमाणद्वयसत्वे विरोधः, तदा दर्शाङ्गान्यवैमृधस्य वाक्यसत्वे प्रयाजस्य प्रकरणसत्वे विरोधः स्यादिति चेन्न अङ्गस्य द्वारैक्य एव विरोधस्य बलाबलप्रयोजकत्वात्। नहि वैमृधप्रयाजयोर्द्वारैक्यमस्ति, ऐन्द्रमन्त्रगार्हपत्यमन्त्रयोः कर्मसमवेतार्थप्रकाशनरूपद्वारस्यैकत्वात् तत्र विरोध एव। न च तयोरपि समवेतार्थप्रकाशनरूपद्वारस्य भेद एव, वाक्यभेदेन प्रकाशनभेदादिति वाच्यम्? समवेतार्थप्रकाशनत्वादिरूपेणैकजातीयद्वारकत्वात् तस्यैव द्वारैक्यशब्दार्थत्वात्। यद्यपि वैमृधप्रयाजयोरपि अपूर्वत्वादिना एकजातीयद्वारकत्वमस्ति, तथापि सकलापूर्वनिष्ठापूर्वत्वस्य मानाभावे तत्तद्वैजात्यस्य स्वीकारात्। यत्र चैकस्यैव प्रधानस्यैकस्मिन्नङ्गे प्रमाणद्वयसत्वं तत्र तयोर्म्मध्ये प्रबलस्याङ्गताग्राहकत्वमितरस्य पुनः श्रुतित्वेन प्रयोजनान्तरकल्पनं, विनिगमनाविरहे द्वयोरपि अभ्युदयशिरस्कत्वरूपफलाधिक्यकल्पनं, कर्मान्तरबोधकत्वं वा। एवं यत्रैकस्मिन्नेवाङ्गे एकस्यैव प्रधानस्य प्रमाणत्रयमस्ति तत्र प्रबलस्यैवाङ्गताग्राहकत्वमितरस्योद्देश्यत्वादि समर्प्पकत्वमात्रत्वात्। यथा अरुणया क्रीणातीत्यादावारुण्यरूपाङ्गे अपूर्वसाधनीभूतक्रयाङ्गत्वे प्रमाणत्रयमस्ति, तत्रैकं प्रमाणं, तृतीयाश्रुतिरपरं क्रीणातिपदसमभिव्याहृतमरुणयेति पदरूपवाक्यं, तृतीयं च प्रकरणं, तत्र वाक्यस्योद्देश्यमात्रसमर्प्पकत्वम्। तथाहि यथैन्द्रयेत्यत्रेन्द्रपदसमभिव्याहृततद्धितसमभिव्याहाररूपं वाक्यं वाचकत्वरूपं लिङ्गञ्चेदमिन्द्राङ्गत्वे ऐन्दमन्त्रस्य प्रमाणद्वयमस्ति यद्यपि, तथापि श्रुतेर्बलवत्वात् गार्हपत्याङ्गत्वमेव। नन्विन्द्राङ्गत्वम्, वाक्यस्योद्देश्यमात्रसमर्प्पकत्वेन श्रुतिसहकारित्वेऽपि कृतिकारकत्वरूपाङ्गत्वबोधकत्वाभावस्तथा प्रकृते क्रयमात्रसमर्प्पकत्वम्वाक्यस्य। यदि क्रयवाचकपदसमभिव्याहारो न स्यात्तदा क्रयस्योद्देश्यत्वप्रत्ययो न स्यादिति भावः। प्रकरणन्तु अपूर्वसाधनत्वलक्षणतात्पर्यग्राहकमेव न चाङ्गताबोधकम्, कल्पनागौरवात्। ननु वाक्यमेवापूर्वसाधनत्वे तात्पर्यग्राह-

कमस्तु, प्रकरणस्यैवोद्देश्यसमर्पकत्वं त्रिनिगमनाविरहादिति चेन्न विनियोजकप्रमाणबलाबलवत्तात्पर्य्यग्राहकप्रमाणबलाबलस्य सिद्धान्तितत्वात् न तु ऐन्द्रद्येत्यत्र तृतीयाश्रुतिगार्हपत्याङ्गत्वे प्रमाणमस्ति । तद्धितश्रुतिरिन्द्राङ्गत्वे प्रमाणमस्त्युभयाङ्गत्वमैन्द्रमन्त्रस्य स्यादिति चेत् ? मुख्यतृतीयाश्रुतिबोधितगार्हपत्याङ्गत्वमेव, तस्य तद्धितस्य मन्त्रदेवता सम्बन्धमात्रबोधकत्वम् । न तु कृतिकारकबोधकत्वम् । प्राधान्येन कृतिकारकत्ववाचकत्वाभावादबलत्वमेव । तथा च तद्धितेन सम्बन्धत्वेन तावदर्थबोधनेऽपि कृतिकारकत्वरूपेण तदर्थाबोधनादिति भावः । अत्र सर्वत्रोत्तरोत्तरस्य पूर्वपूर्वकल्पकत्वेन प्रामाण्यमिति प्रागेव व्यवस्थापितमतो नेह विविच्यते । तथा च पूर्वपूर्वेण शेषशेषिणोर्निराकांक्षत्वापादनेन श्रुतिकल्पनं यावदवगतस्योत्तरस्य बाध इति भावः । प्रकृते तु श्रुतिरेव प्रथमम् । ननु यथा प्रकृत्यङ्गत्वबोधानन्तरमपि निराकांक्षाणां प्रकृत्यङ्गानां विकृत्याकांक्षयैवातिदेशे विकृतौ कल्प्यते तथैन्द्राकांक्षयैव लिङ्गस्येन्द्रप्रकाशकताबोधिकाया अनेन मन्त्रेणेन्द्रं प्रकाशयेदिति श्रुतेः कल्पकत्वं स्यादिति चेत् न स्मृतिरूपप्रकाशनस्य ध्यानाद्युपायान्तरेणापि संभवतद्विकृतिवदिन्द्रस्य मन्त्राकांक्षायाः सर्वत्रानुत्थानादतः श्रुत्यागार्हपत्याङ्गत्वमेव । न च श्रुतेः करणत्वमात्राभिधायित्वेन गार्हपत्यनिरूपितत्वं, तत्र गार्हपत्यपदसमभिव्याहाररूपवाक्यादेव प्रतीयते । अतो वाक्यविनियोग एवायं न श्रौतस्तत्कथं श्रुतिलिङ्गविरोधोदाहरणमिति वाच्यं तथात्वेऽपि ब्राह्मणवाक्यत्वेन यद्यप्यन्यदैवत्यः पशुस्तथाप्याग्नेया मनोता कार्येत्यादिवल्लिङ्गापेक्षया तस्य प्रबलत्वात् । वस्तुतस्तु यथात्रोक्तरीत्या केवलया श्रुत्या न विरोधस्तथा वाक्येनापि न विरोधः । गार्हपत्यमित्यत्र द्वितीयायास्सामीप्यार्थकत्वात् । तथा च गार्हपत्यसमीप उपतिष्ठेदित्यर्थकत्वे विरोधाभाव इति । परन्तूभयविरोधसत्त्वेऽपि प्राधान्येन व्यपदेशा भवन्तीति न्यायेन श्रुतिलिङ्गविरोधोदाहरणम् ।

अत्र नवीनवाचस्पतिमिश्राः "प्राप्ता तवेयं किलकौमुदाख्या जागृष्व जागृष्व च लोकनाथे" त्यस्य मन्त्रस्य लिङ्गात्कौमुदाख्यद्वादशीकालिकप्रबोधपूजायां प्राप्तौ शयनस्यापि प्रबोधसजातीयतिथिनियमेन एकादश्यां लाभः ।

एकादश्यां तु शुक्लायामाषाढे भगवान् हरिः ।
भुजङ्गशयने शेते यदा क्षीरार्णवे सदा ।

इत्यत्र सप्तमी श्रुत्या बाधः क्रियते। श्रुतेर्लिङ्गापेक्षया बलवत्वादित्याहुः।

एकस्यैव प्रमाणे द्वे यदाङ्गस्य प्रधानयोः।
द्वयोस्तत्र विरोधः स्याद्बलाबलनिबन्धनः॥
एकस्यैव प्रमाणे द्वे प्रधानस्य यदा द्वयोः।
अङ्गयोस्तु तदा ज्ञेयं बलाबलनिरूपणम्॥
एकत्राङ्गे यदैकस्य प्रधानस्य भवेद्द्वयम्।
प्रमाणं बलवत्तत्र ग्राहकञ्चान्यदन्यदम्॥
एवंकर्त्तव्यमेतेषां बलाबलनिरूपणम्।
त्रयाणां वा चतुर्णां वा मानानामेकपातिनाम्॥

इतिमीमांसारसपल्वलेश्रुतिलिङ्ग बलाबलतरङ्गः।

[लिङ्गविरोधे बलाबलनिरूपणम्]

लिङ्गयोर्विरोधस्तत्र यत्र एकस्यैकत्र लक्षणया प्राप्तिरपरत्र शक्त्या प्राप्तिस्तत्रोहनीय इति।

शक्तिरेकस्य मन्त्रस्य स्यादेकत्रापरत्र च।
लक्षणा यदि तत्र स्यान्मन्त्रः शक्तिप्रकाशकः॥

लिङ्गवाक्ययोर्विरोधो विविच्यते। "स्योनन्ते सदनं कृणोमि" "घृतस्य धारया-सुखेव कल्पयामि तस्मिन् सीदेति मन्त्रसदनमित्याद्यभागस्य सदनप्रकाशकत्वं, तस्मिन् सीदेति भागस्य सादनप्रकाशकत्वं, लिङ्गस्य विनियोजकत्वे सदने सादने मन्त्रस्य विभज्यैव विनियोगो भवेत्, तादृशसदनाधिकरणक सादनप्रतिपादकमहावाक्यस्य विनियोजकत्वे सम्पूर्णस्यैव सदने सादने वा विनियोगो भवेदिति लिङ्गवाक्ययोर्विरोधः। अत्रेदम्बोध्यं—ननु कल्पयामीत्यन्तवाक्यस्य तस्मिन् सीदेत्यनेन सहैकवाक्यत्वाभावः, एकवाक्यतालक्षणस्य तत्राव्याहृतत्वात्। तथाहि-अर्थैक्यादेकं वाक्यं साकांक्षं चेद्विभागः स्यादिति जैमिनिसूत्रम्। तथा च अर्थैक्यं वाक्यार्थस्य सम्बन्धात्मकतया संसर्गस्य प्रतिपदार्थं द्वन्द्वभेदात्, नापि प्रयोजनैक्यं तत् यदि शेषिरूपप्रयोजनैकत्वं तत्तदा सौर्य्यंश्चरुमित्यादौ द्रव्यदैवते प्रति यागः। तम्प्रति च फलं तदित्यनेकत्वादर्थैकत्वानुपपत्तिः सर्वेभ्यः कामेभ्यो दर्शपौर्णमासाभ्याम् इत्यादौ

च फलस्य नानात्वात् सा। अथ मुख्यविशेष्यरूपप्रयोजनैकत्वम् तदापि दर्शपौर्णमासाभ्यां स्वर्गकामो यजेतेत्यादौ आग्नेयादिभावनानां मुख्यविशेष्याणां भिन्नत्वात्तदेकत्वानापत्तिः। अथ मुख्यविशेष्यप्रतिपादकशब्दैकत्वं तत्तदा व्रीहियववाक्ययोर्भगो वां विभजत्वित्यादौ च तत्प्रतिपादकशब्दभेदादर्थैकत्वाभावात् विभज्यमानसाकांक्षत्वात् पदविशेषणवैयर्थ्यापत्तिरिति चेत् न, भिन्नप्रतीतिविषयानेकमुख्यविशेष्यराहित्यमर्थैकत्वम्, अस्ति च गामानयेत्यादौ तदानयनभावनाया मुख्यविशेष्यभूताया एकत्वात्। अस्ति चेद् दर्शपौर्णमासवाक्येऽपि अनेकासामपि आग्नेयादिभावनानामेकेन प्रत्ययेनोपादानात् भिन्नप्रतीतिविषयत्वाभावः। व्रीहियववाक्ययोर्भगो वां विभजतु पूषा वां विभजतु" इत्यादौ च सत्यपि भिन्नप्रतीतिविषयत्वे मुख्यविशेष्यस्य यागविभागभावनादेरेकत्वादर्थैकत्वोपपत्तिः। नह्यत्रा"युर्यज्ञेन कल्पतां" "प्राणो यज्ञेन कल्पतामि" त्यत्रवदाप्तभेदे क्लृप्तीर्वाचयतीति बहुवचनवद्विभागभेदे प्रमाणमस्ति यतोऽर्थभेदं शङ्केत अतः सत्यपि व्रीहियववाक्ययोर्भगोवां विभजतु" अर्य्यमा वांविभजतु पूषा वां विभजतु इत्यादौ चोक्तविधावर्थैकत्वेऽपि विभज्यमानसाकांक्षत्वाभावाद्वाक्यभेदसिद्धिः। विभज्यमानसाकांक्षत्वमन्वीयमानपदार्थयोरनन्वये अनिवृत्ताकांक्षत्वम् यथा गामानयेत्यत्र गोशब्दस्य। न च भगो वां विभजत्वित्यत्रार्य्यमा वामित्यस्यानन्वये साकांक्षत्वमस्ति। स्ववाक्योपात्तविभक्त्यन्वयेनैव निराकांक्षत्वादतोऽस्त्येव विभज्यमानसाकांक्षत्वविशेषणसार्थक्यम्। अर्थैकत्वविशेषणसार्थक्यन्तु "स्योनन्ते सदनं कृणोमी" त्यस्यापि तस्मिन् सीदेत्यनेनानन्वये तच्छब्दस्य साकांक्षत्वसत्वेन विभज्यमानसाकांक्षत्वादेकवाक्यतापत्तेर्वारणाय अत्र विभज्यमानसाकांक्षत्वेऽपि अर्थैकत्वाभावान्नहि सदनकरणप्रतिष्ठापनयोरेकदोपादानमस्ति येनैकप्रतीतिविषयत्वमाशङ्केत। सदनकरणभावनायाः प्रतिष्ठापनभावनायां प्रकारत्वाङ्गीकारेण मुख्यविशेष्यत्वाभावशङ्का तु मयुक्ता आख्यातस्वाभाव्येन तस्या अपि मुख्यताप्रतीतेस्तच्छब्दस्य च वाक्यान्तरोपात्तसदनप्रकाशकत्वेनाप्युपपत्तेरतोऽर्थैकत्वाभावादेव तत्रैकवाक्यत्वाभावः। तस्मान्नेदमुदाहरणं सङ्गच्छते। देवस्य त्वादिवाक्ये तूभयसत्त्वाद् युक्तं निर्वपामीत्यन्तस्य वाक्यत्वम्। अत्र **देवनाथठक्कुराः** — तच्च प्रकृते अस्ति, तस्मिन् सीदेति विभागकरणे कस्मिन्नित्याकांक्षायाः सम्भवात्तादृशाकांक्षानिवर्त्तकं स्योनन्तेति वाक्यं भवत्येव। तस्मादेकवाक्यत्वात् सकलमन्त्रस्य सदनसादनयोरन्यतरत्रोभयत्र वा प्रतिष्ठापन एव वा

तस्मिन्निति पदसभिव्याहृत्तादृशवाक्येन प्रयोगप्राप्तिसम्भावनायां तादृशमहावाक्यप्रतिसन्धानपूर्वप्रवृत्तेन लिङ्गेन मुख्यविशेषणत्वेन स्वार्थबोधकस्याख्यातस्य परोपसर्ज्जनतया स्वार्थबोधकत्वकल्पने मानाभावात् । तथा च वाक्यैकवाक्यतया अन्वये आख्यातार्थस्य विशेषणतयैवान्वय इति भावः । न च वाक्यैकवाक्यतया अनन्वये तच्छब्दार्थानुपपत्तिः । सा वैश्वदेवीत्यादि वाक्यगततत्पदादिवत् पूर्वपरामर्शकत्वात् । तस्मात् प्रत्येकमेव विनियोगो वाक्ययोः सदने सादने च वाक्यस्य विनियोजकत्वे श्रुतिकल्पनाविलम्बो लिङ्गापेक्षया पूर्ववदनुसन्धेयः ।

नानामुख्यविशेष्यबोधजनकैर्नानापदैः शून्यता –
मर्थ्यैक्येन पदेन जैमिनिमुनिर्वाक्यस्य सूत्रे जगौ ।
साकांक्षत्वविभागशब्दनिचयैः प्रागब्रवीदन्वया –
दाकांक्षागतमुत्थितत्वमनयोरन्वीयमानार्थयोः ।

वाक्ययोर्विरोध उदाह्रियते "स वा एषा ज्ञस्ये"ति एकवाक्यं ये यत् किञ्चित् प्राचीनमग्नीषोमीयात्ते नोपांशु चरन्तीत्यपरं वाक्यं श्रुतमस्ति । तत्र पूर्ववाक्यस्थयज्ञस्येति पदेन सहोत्तरवाक्यस्थ प्राचीनपदस्यैकवाक्यत्वं यदि, तदोपांशु स्वरस्य यागभागधर्मत्वं लभ्यते । यदि चोत्तरवाक्यस्थयत्किञ्चित्पदेनैव सह प्राचीनपदैकवाक्यत्वं तदोपांशुस्वरस्य पदार्थधर्मत्वं लभ्यते । एवं वाक्यद्वयसमाहार आयाति । अथ वाक्यभेदे कथं यज्ञभागधर्मत्वं पदार्थधर्मत्वं वेति चेत् ? तथाहि प्रागयणीय दीक्षणीयाद्युत्तरस्मिन्, उदयणीयादि पूर्वस्मिन् कस्मिन्दिने पश्चाहदिनसाध्यो यागः कर्त्तव्यः । अयं तु अग्नीषोमीयात् पूर्वतन एव । तत्र यत्किञ्चित् प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्तीति वाक्यमुपांशु स्वरविधायकं तदर्थश्चाग्नीषोमीयात् पूर्वतनङ्कर्त्तव्यं यत्किञ्चित्कर्म्म तदुपांशुस्वरेण कर्त्तव्यमित्यर्थः । अत्रायं भावः, यदि यज्ञस्येति पदेन सहैकवाक्यता प्राचीनपदस्य विधीयते तदा यज्ञस्य यत्किञ्चिदग्नीषोमीयात् प्राचीनो भाग इत्यस्य पर्य्यवसितार्थत्वे तत्रोपांशुस्वर इति व्याख्यानमुरीक्रियते तदा तासामिष्टीनां पश्चाहदिनसाध्ययागभागभूतानां यागभागधर्मत्वेन प्राप्तस्योपांशुस्वरस्य तदिष्टि-

विकृतिषु नातिदेशात्प्राप्तिर्भवितुमर्हति प्राधान्येनोपदेशाभावात् यागभागत्वपुरस्कारेणोपदेशस्यातथात्वात् । यदि यत्किञ्चित्पदेनैकवाक्यतां स्वीकृत्याग्नीषोमीयाद्यत्किञ्चित् प्राचीनं कर्म तत्रोपांशुः कर्त्तव्य इति व्याख्यास्तदा तद्रूपेणोत्पत्तिगतानामिष्टीनां प्राप्तस्योपांशोस्तद्विकृतिष्वतिदेशः सम्भवेदिति दिक् । सन्निधानाम्नानाद्यत्किञ्चित् पदेनैव एकवाक्यता । तथा च यत्किञ्चित्पदघटितवाक्येन तद्वाक्यं बाध्यते । तस्मात्पदार्थधर्म एवोपांशुर्न भागधर्म्मः ।

ननु यदि सन्निधानमेवापरवाक्यबाधकं तदा "अभुक्त्वा प्रातराहारं निवेद्य-व्रतमाचरेदि"त्यादौ प्रातराहारमिति वाक्येन प्रातर्न्निवेद्येति वाक्यस्य बाधः स्यादिति चेत्, प्रातराहारेत्यन्वये व्रतारम्भस्य प्रातः कालालाभापत्तेः ।

ननु प्रातःकाले व्रताभावेऽपि क्षत्यभावः "व्रतन्निशामुखे ग्राह्यं हरिस्तावकदर्शना" दित्यार्षवचनात् । तथा च "सायम्प्रातर्मनुष्याणामशनन्देवनिर्म्मित"मित्यार्षवचनप्राप्त प्रातः कालिकभोजनं निवृत्य सायङ्काले व्रतारम्भः कार्य इत्यर्थः । न च भवन्मते व्रतारम्भ उपवासदिने व्रतदिने वेत्यत्र विनिगमनाविरहः । मन्मते तु प्रातर्न्निवेद्येत्यन्वयबलादेवाग्रिमदिने व्रतारम्भ आयातीतिवाच्यम् । अभुक्त्वेत्यनेन पूर्वदिने एकभुक्तप्राप्त्यैवोत्तरदिने व्रतस्य प्राप्तेः । न चोपवासदिने एवोभयसम्भवे क्त्वाप्रत्ययान्वयापत्तिरिति वाच्यम् ? भोजनचतुष्टयनिवृत्तिरूपोपवासस्यान्यथानुपपत्त्यैवैकभुक्तदिनसायंकाले व्रतारम्भस्वीकारादिति चेत् ? आहारपदस्य विशेषिताहारपरतायामेवाहारमित्यत्रैकवचनस्यैकत्वार्थकत्वसम्भवेनैकभोजननिषेधस्योपपत्तिः ।

आहारपदस्य प्रातराहारबोधकत्वे अर्थत एव एकाहारनिषेधसम्भवात् । न चैकवचनं निरर्थकमेव ? तथा सत्याहारसामान्यनिषेधस्य प्राप्त्या पूर्वदिनेऽप्युपवासस्यैव प्राप्तेः । न चाहारस्यानुपादेयत्वेन संख्या तत्राविवक्षितैवाहारस्योपादेयत्वस्य प्रागेवोपपादितत्वात् । प्रातराहारेत्यन्वये निवेदनस्य प्रातःकाले अप्राप्तेश्च । न च व्रतन्निशामुखेत्यार्षवचनात् सायमेव निवेदनमस्तु, शिष्टाचारविरोधात् । तादृशवचनस्य प्रायश्चित्तरूपव्रतपरत्वाच्च । नन्वस्तु व्रतादावेभक्तप्रापकं वचनमिदं श्राद्धादा

वेकमुक्ते मानाभाव इति चेन्न, निरामिषं सकृद्भुक्त्वा सर्वभुक्तजनो गृह" इत्यार्षवचनस्यैव मानत्वात्। नन्विदं वाक्यं निरामिषसकृद्भोजनविधायकं नैकमुक्ते प्रमाणम्, निरामिषसकृद्भोजनस्य रागत एव प्राप्तेः। न च श्राद्धोद्देश्येन निरामिषसकृद्भोजनविधायको गुणविधिरस्तु, उद्देश्यवाचकपदसापेक्षतापत्तेरिति चेत् नायं निरामिषसकृद्भोजनविधिस्तस्य रागत एव प्राप्तेरुपवासोत्तरश्राद्धकरणे श्राद्धस्य निरङ्गत्वापत्तेश्च। किन्तु द्वितीयभोजननिवृत्तिविधायकपरिसंख्याविधिरेव।

ननु निरामिषं सकृद् भुक्त्वेति क्त्वा श्रुतिबलात् साक्षादेव तस्य श्राद्धाङ्गत्वं प्रतीयत इति चेर्त्तहि आमिषभोजनसकृद्भोजनयोर्निवृत्तिर्न स्यात्। द्विभोजनेऽपि अङ्गस्य सिद्ध्यापत्तेश्च। न च सकृदेव निरामिषं भुञ्जीतेत्येवं नियमविधिरेवायमस्तु, नियमविधिकल्पने गौरवात्। नियमविधिबलात्तादृशभोजनस्यावश्यकत्वे उपवासाग्रिमदिने श्राद्धकरणे अङ्गहान्यापत्तेश्च। **अस्मन्मते** द्वितीयभोजननिवृत्तिबोधने सकृद्भोजने औदास्यमेव। न च परिसंख्याकल्पने स्वार्थहानिपरार्थकल्पनप्राप्तबाधादित्रैदोष्यापत्तिरिति वाच्यम्? प्राप्ते अर्थे विधिप्रवृत्तेरसम्भवात् तस्यापीष्टत्वात् पञ्चपञ्चनखा[न्] भक्षयेदितिवदधिकस्य विधिवादे वक्ष्यमाणत्वादित्यलमप्रकृतेनेति प्रकृतमनुसरामः।

निकटे न भवेदेकमपरं व्यवधायिना।
पदेनैकपदे वाच्यं तयोराद्येऽधिकं बलम्॥

## [वाक्यप्रकरणविरोधनिरूपणम्]

वाक्यप्रकरणयोर्विरोध उदाह्रियते। वैमृधस्य वाक्यादवगतपौर्णमासाङ्गत्वेन प्रकरणादवगतदर्शाङ्गत्वबाधः। यत्तु अग्नीषोमादिदं हविरजुषेतामवीवृधेता महोज्यायो क्राताभिन्द्राग्नी इदं हविरजुषेतामवीवृधेता महोज्यायो क्रातामि त्यादि वाक्य गताग्नीषोमादिपदेन सहैकवाक्यतापन्नानामिदं हविरित्यादिपदानाप्रकरण प्राप्ताङ्गदेवता प्रकाशकत्वं वाक्येन बाध्यत इत्युदाहरणमुक्तं मूले। तन्न, तस्य गौणप्रकरणविषयत्वात् तथाहि प्रकरणं द्विविधम् तत्रैकमाकांक्षाख्यं मुख्यम् अपरम् अधिकाराख्यप्रकरणम्। तत्राद्यं प्रधानतया निरुक्तमेव, द्वितीयं सन्निधिपाठरूपं तद्विशेषणतयोक्तम्। तयोराद्य-

मङ्गताग्राहकं द्वितीयमपूर्वसाधने लक्षणाग्राहकत्वम् । तत्रापि श्रुतिलिङ्गविनियुक्तस्य सिद्धत्वेनाङ्गताग्राहकप्रकरणाविषयत्वेन प्रकृतेऽनूक्तवाक्यस्य तदविषयत्वादपूर्वसाधनत्वलक्षणातात्पर्यग्राहकरूपगौणप्रकरणविषयत्वमिति द्रष्टव्यम् । प्रकरणयोर्हि विरोधे महाप्रकरणमवान्तरप्रकरणेन बाध्यते ।

[प्रकरणक्रमविरोधनिरूपणम्]

प्रकरणक्रमयोर्विरोध उदाह्रियते । राजसूययागप्रकरणे अभिषेचनीयाख्यसोमयागसन्निधावक्षैर्दीव्यतीति श्रुतमस्ति । तत्र तद्वाक्य प्रतिपादिताक्षविदेवनस्य सन्निधिपाठरूपक्रमादभिषेचनीयाङ्गत्वं, राजसूयाङ्गत्वप्रापकमहाप्रकरणेन बाध्यते । अत्रेयं प्रक्रिया कतिपयेष्टिकतिपययागात्मक एको यागो राजसूयः, तावत्पर्याप्तराजसूयत्वघटक एकोऽभिषेचनीयाख्यः तत्सन्निधावक्षैर्दीव्यतीत्याम्नानम् । तत्रायं बाध्यबाधकभावः । नन्वभिषेचनीयायाः फलवत्त्वेनाङ्गताग्राहकं प्रकरणं तस्यापि सम्भवति । तथाचाभिषेचनीयेतिकर्त्तव्यताकांक्षाया एव विदेवनादिना निवृत्तिरस्तु, प्रकृते प्रकरणस्य प्रकरणाबाधकत्वादिति चेन्न, तस्याविहितत्त्वेन प्राकृताङ्गैरेव निराकांक्षत्वात् । न च विकृतावपि प्राकृताङ्गानुवादेन वैकृतमङ्गं वाचनिकं विधीयते, यथान्यत्र तथा प्रकृतेऽपि अस्तु । तथाहि-दधिसंयुक्तमाज्यं पृषदाज्यं नाम गुणो भवति । तत्र विधिः दधिविकृतिविशेष दधिसंयुक्तेनानुयाजान् यजेत । अत्रातिदेशप्राप्तानुयाजोद्देश्येन संपृक्तं द्रव्यं विधीयते । तथा च विकृतिगताकांक्षायामनिवृत्तायामेव यथा अतिदेशाङ्गप्राप्तानुयाजोद्देश्येन संपृक्तं द्रव्यं वाचनिकं विधीयते तथात्रापि । तदानीमेवातिदेशेनाङ्गप्राप्तावपि वाचनिकं विदेवनं विधीयते इति चेन्न, प्राकृताङ्गानुवादेन विहितं यदपूर्वमङ्गं तस्योपहोमवद्विकृत्याकांक्षायां निवृत्तायामेव विधानात् । यस्य हि प्राकृतकार्य्यतापन्नतया वैकृताङ्गस्य विधानं तस्य विकृत्याकांक्षायामनिवृत्तायामेव तत्, यथोदुम्बरत्वं शरादेः, अत्रेयं प्रक्रिया विशेषादादेशः क्वचित् प्राकृतं धर्ममन्यथयति क्वचिद्व्यावर्त्तयति क्वचित् सर्वेष्वेव स्थानेषु तदेव विदधाति । तेषामाद्यो यथा—"शरमयं बर्हिर्भवती"त्यादेशे अतिदेशप्राप्तं शरमयबर्हिष्ट्वं कौशबर्हिषमन्यथयति । द्वितीयो यथा वैश्वदेवादन्नमुद्धृत्य, पर्य्युक्ष्य, स्वाहाकारेण जुहुयादित्यादिवाक्यप्राप्तपर्य्युक्षणमङ्गान्तरं व्यावर्त्तयति । न चाप्राप्तपर्य्युक्षणप्रापकमेवेदं, प्रकृतिवदिति न्यायादेव सकलहोमधर्मस्य तस्य प्राप्तेः । नचाग्निमुपक्रम्य पर्य्युक्षणादिहोम-

धर्मस्योपदेशादग्न्यधिकरणहोम एव, तादृशन्यायादपि तल्लाभात्। प्रकृते अप्राप्तप्रापकत्व-मेवास्य विधेरिति वाच्यम्, अग्न्यादिपदस्य होमाधारत्वमात्रपरत्वात्। तथा च प्रकृति-वदिति न्यायादेव प्राप्तस्य पर्य्युक्षणस्य पुनः प्रापकं प्रकृतवाक्यम् अङ्गान्तरव्यवच्छेद-कत्वमिति ध्येयम्। तृतीयो यथा गृहमेधी। तथाहि-गृहमेधिनाम्नीष्टिः, तत्राज्यभागौ यजतीति विशेषोपदेशः। तत्र सर्वासामिष्टीनान्दर्शपौर्णमासौ प्रकृतीति न्यायप्राप्तौ दर्शाद्यङ्गावाज्यभागौ होमौ सर्वोपकारहेतुत्वेन बोधयन्नङ्गान्तरमेव व्यावर्त्तयति। एवमा-घारमाघारयतीति वाक्यादप्यतिदेशप्राप्ताधारहोमस्याज्यभागहोमस्थानेऽपि विशेषोपदेशोऽ-ङ्गान्तरमेव व्यावर्त्तयति। अन्यथा तदुपादानवैयर्थ्यं स्यात्। आधारमाधारयतीत्यस्य विध्यर्थत्वम् ऐन्द्रन्दधि भवतीत्यादिवद् बोध्यम्। अन्यथा पूर्वकल्पसम्भेदः। केचित्तु पर्य्युक्ष्येत्यस्यापरिसमू[ह]नादीनां व्यवच्छेद एव भेदकमाहुः।

आदेशो विकृतौ विशेषविहितो यःप्राकृताङ्गाश्रयो
धर्म्मम्प्राकृतमन्यथा विदधते कुत्रापि कुत्रापि च।
व्यावृत्तं कुरुते स्वतोऽन्यमखिलं यत्प्राकृताङ्गं भवेत्
कोऽप्येकं विदधाति शेषमखिलस्थानेषु तस्याङ्गिनः।

एवमतिदेशश्च क्वचिद्वचनात्, क्वचिन्नामसाम्यात्, क्वचित्प्रकृतिवदिति न्यायात्। तत्राद्यो यथा—

प्राप्तःस्नायी भवेन्नित्यं द्वौ मासौ माघफाल्गुनौ।
प्रातःस्नायी च सततं द्वौ मासौ माघफाल्गुनौ।
देवान् पितॄन् समभ्यर्च्य सर्वपापैः प्रमुच्यते।

इति विष्णुधर्मवाक्यप्राप्तस्नाने नित्यस्नानधर्मस्य देवतापितृतर्प्पणादेः देवान्-पितॄनिति प्रत्यक्षवचनादेवातिदेश इति जीर्णोद्धारकृतः। द्वितीयस्तु कौण्डपायिन-मयने मासमग्निहोत्रं जुहोतीत्यादौ नित्याग्निहोत्रधर्म्माणान्नामसाम्यादेवातिदेशः। तत्र तद्धर्मलाभायैवाग्निहोत्रपदप्रयोगः। तृतीयस्तु पार्वणधर्माणामेकोद्दिष्टादौ यथातिदेशः इतिकर्त्तव्यतासाकांक्षत्वात्। नातु सर्वस्य प्रकृतिवद्धर्मस्य सर्वविकृतावतिदिश्यते, अति

प्रसङ्गात् । किन्तु ययोः प्रकृतिविकृत्योः साम्यं तत्रैवातिदेशेऽन्यथा विनिगमनायाः असम्भवात् । न च पार्वणैकोद्दिष्टयोरसाम्यं प्रमीतयोद्देश्यकत्वस्यैव साम्यत्वात् । अत एवैकोद्दिष्टादावावाहनादिप्रतिषेधोऽपि सङ्गच्छते । प्रसक्तं हि प्रतिषिध्यते । तत्प्रसक्तेरेकोद्दिष्टादावतिदेशं विना असम्भवात् । दर्वी होमस्य होमान्तरसमानधर्मा-भावान्न धर्मान्तरहोमातिदेशः, होमान्तरस्यान्यकरणकत्वात् । होमत्वं प्रमेयत्ववदन-तिदेशक एव । अत एव—

फाल्गुनस्य तृतीयायां लवणं यस्तु वर्ज्जयेत् ।
समान्ते शयनं दद्यात् गेहञ्चोपस्करान्वितम् ।
सम्पूज्य विप्रमिथुनं भवानीप्रीयतामिति ।
गौरीलोके वसेत्कल्पं सौभाग्यव्रतमुच्यते ॥

इत्यादौ तृतीयाव्रतान्तरसधर्मणि तृतीयाव्रते अतिदेशान्न नक्तभोजनादिलाभः, तृतीयाव्रतत्वेन साम्यस्याप्रयोजकत्वात् । विनिगमनाविरहेणानेकविधतृतीयाव्रतानां धर्मस्यातिदेशस्य सम्भवात् अतिरिक्तकल्पने गौरवाच्चेति दिक् ।

कुत्रचिद्वचनादेव नामसाम्याच्च कुत्रचित् ।
क्वापि प्रकृतिवन्न्यायादतिदेशस्त्रिधा मतः ।

एव 'अग्निहोत्रं जुहोति, यवागुम्पचती'त्यादावपि सन्निधिपाठरूपप्रकरणस्य नाङ्गताग्राहकत्वम् किन्तु इतिकर्त्तव्यताकांक्षारूपप्रकरणस्य क्रमापेक्षया बलवत्त्वादर्थं क्रमादरोऽस्तु, अग्निहोत्रयवागूपाकयोः पराकांक्षासत्वात् । उच्छिष्टरेतोविण्मूत्रं संस्पृश्योपमृज्य चाचम्य प्रयतो भवति । त्रिःप्रक्षाल्य तं देशमित्यादावेतेषामितिकर्त्तव्यता प्रकारकाकांक्षाविषयत्वाभावात् कथमार्थक्रमादर इति चेत् तत्रापि आर्थक्रमस्य सिद्धा-न्तित्वात् तद्विनिगमनस्य वक्ष्यमाणत्वात् । न चानन्तर्य्यवाचिक्त्वाप्रत्ययेनानन्तर्य्यं प्रतीयते इति वाच्यम् ? आर्थक्रमेण शाब्दक्रमबोधस्योक्तत्वात् । नन्वग्निहोत्रं जुहोति, यवागुम्पचतीत्यादौ होमद्रव्याकांक्षायां यवागूपाकविधेरेव तदाकांक्षापूरणक्रमत्वं सन्निधानात् विध्यन्तराभवात् । अन्यथा अग्निहोत्रे द्रव्यान्तरं साधनतया यवागूपाके

चादृष्टार्थत्वमित्युभयकल्पनागौरवं स्यात् । तेन शाब्दक्रममुपेक्ष्य यवागुम्पचत्यग्निहोत्रं जुहोतीत्यर्थक्रमादरः । प्रकृते तादृशगौरवकल्पनाविरहात् । कथमार्थक्रमादर इति चेन्न ? कल्पनागौरवस्योपलक्षणत्वेन अत्रापि शाब्दक्रमोल्लंघनं शिष्टाकोपस्वरसात् । तदुक्तं शिष्टाकोपसंज्ञके अधिकरणे वेदं कृत्वा वेदीङ्करोतीत्यत्र वेदः कुशमुष्टिः वेदी परिष्कृता भूमिः । अत्र क्त्वाबलेन क्रमलाभे मध्ये क्षुदादिरूपनिमित्तोपनिपाते-क्षुते आचमेदिति वचनान्नैमित्तिकाचमनेन तद्भङ्गस्य कल्पना । न च श्रुतेः स्मृत्यपेक्षया बलवत्त्वेन तत्र नाचमनं, स्मृतेर्वेदमूलकत्वेन प्रामाण्यात् श्राद्धस्य क्रमतात्पर्याभावात् । युक्तं चैतत्—

नैमित्तिकानि कर्माणि निपतन्ति यदा यदा ।
तदा तदैव कार्याणि—

इति स्वरसात् । तस्माद्रेतोमूत्रादिसंस्पर्शनिमित्तानामुपनिपातक्रमेणैवाचमनादि क्रम इति सिद्धान्तः ।

ननु शब्दक्रमस्य विलय एव, सर्वत्रार्थक्रमेणैव निर्वाहादिति चेन्न

या दिव्येत्यर्घमुत्सृज्य दद्याद् गन्धादिकं ततः ।
वस्त्रोत्तरं गन्धपूर्वन्दत्वा संश्रवणादि च ।
पितृपात्रे निधायाथ न्युब्जमुत्तरतो न्यसेत् ।

इत्यादावर्घदानोत्तरं गन्धादिदानादेः क्रमादेव प्राप्तेः । न च पितृपात्र इत्यत्र विशेषतः शब्दक्रमाभावात् प्रपितामहार्घजलशेषस्य पितृपात्रे प्रक्षेपे बाधकाभाव इति वाच्यम् ? पशूननक्तीति प्रावृत्तिकक्रमविरोधात् । तथाहि पशूननक्ति, पशून् प्रोक्षति पशूनालभते, इत्यत्रपशूनामेकाञ्जनक्रियाया असम्भवात् स्वेच्छयैव सप्तदश पशूनामञ्जनं नियामकान्तराभावात् । ततस्तथैव प्रोक्षणालम्भनादिप्रावृत्तिकक्रमस्यैव तन्नियामकत्वात् अत्र देवनाथठक्कुराः क्रमानुरोधादपि पदार्थत्वसमयस्यावश्यकत्वात् । एवञ्च तत्र पदार्थानुसमय एव न काण्डानुसमयः । तत्त्वे एकस्यैवाञ्जनाभ्युक्षणालम्भनानन्तरमपरस्य तानि स्युरिति प्रावृत्तिकक्रमोदाहरणं, तन्न स्यादिति व्याचक्रुः । एवं जलदानति ल

प्रक्षेपादावपि पदार्थानुसमय एव बोध्यः शब्दक्रमानुरोधात् । तदयं समुदितार्थः । यथा प्राजापत्येषु सप्तदशसु पशुषु पशुननक्ति, पशून् प्रोक्षति, पशूनालभते, इति प्रत्येक श्रुतानां प्रोक्षणादिरूपाणां पदार्थतावच्छेदकावच्छिन्नानामेव पाठक्रमानुरोधात् सर्वेषु पशुष्वञ्जनं निर्वर्तनान्तरप्रोक्षणारम्भः । अन्यथा पाठक्रमादवगतस्याञ्जने प्रोक्षणानन्तरकर्त्तव्यत्वस्य बाध आपद्येत । अतएवेदं प्रावृत्तिकक्रमोदाहरणमित्युपपद्यते । अन्यथा तत्र काण्डानुसमयप्रसक्तौ तद्विरोधापत्तेरिति सदानन्दठक्कुरः । तथा तिलजलादीनामपि पदार्थतावच्छेदकावच्छिन्नानां शाब्दक्रमानुरोधात् पदार्थानुसमय एव । नन्वस्तु सर्वतः पदार्थानुसमय एव काण्डानुसमये मानाभावादिति चेन्न, सपिण्डीकरणादौ तद्दर्शनात् । तत्र देवकाण्डनिवर्त्तनानन्तरं पितृकाण्डनिवर्तने काण्डानुसमयस्यैव बीजत्वात् । न च तत्रापि विश्वेदेवश्राद्धस्य पदार्थानुसमय एव प्रकृतौ पार्वणादौ तथैव कर्त्तव्यत्वादिति वाच्यम् ? प्रकृतिवदिति न्यायप्राप्तस्यापि विश्वेदेवस्य पुनःप्रापकस्य सपिण्डीकरणश्राद्धं देवपूर्वन्निवेदयेदिति स्मृत्यादेः काण्डानुसमयकर्त्तव्यत्वतात्पर्यकत्वात् ।

ननु — द्वादशप्रतिमास्यानि आद्यं षाण्मासिके तथा ।
सपिण्डीकरणञ्चेति प्रेतश्राद्धानि षोडश ॥

इत्यत्रैकादशाहस्याद्यश्राद्धत्वं शब्दादेव लभ्यते, मासिकसपिण्डीकरणयोः पौर्वापर्यं शब्दक्रमात् । तत्र द्वादशदिनसपिण्डनपक्षे प्रतिमासं मासिककरणे शब्दक्रमभङ्ग इति चेन्न, सपिण्डनापकर्षेण मासिकानामपकर्षात् । ननु सपिण्डने द्वादशदिनस्यापि कालत्वं विहितमेव, मासिकानान्तु तत्तन्मासा एव तथा, तेषां कथमपकर्ष इति चेन्न, तदन्तापकर्षन्यायात् मासिकानामपकर्षस्यानेक ग्रन्थकार सम्मतत्वात् । तथाहि तिष्ठन्तम्पशुम्प्रयजतीति दैक्षे पशौ श्रूयते । तस्य पशुस्थितिप्रयाजविधायकत्वमन्यत्र प्रथमं पश्वालंभनं, ततो हविरासादनं, ततः प्रयजनमिति क्रमः । तत्र पशुस्थितिकाल एव प्रयजनविधानात् वाचनिके प्रयाजापकर्षे अन्यत्र क्लृप्तक्रमानुरोधात् हविरासादनस्यापकर्षः । अन्यथा क्रमविरोधः स्यात् इति तदन्तापकर्षादिकर्त्तव्यस्यापकर्षः । एवम्प्रथममनुयाजेन यजति तदुत्तरं सूक्ता ऋचः, ततो अग्निमारुतमिति प्रकृतौ क्रमेऽपि विकृतवाग्निमारुतादूर्द्ध्वम् अनुयाजैश्चरन्तीत्यनेनानुयाजस्योत्कर्षे सिद्धे सूक्तवाक्यस्याप्युत्कर्षात् । अन्यथा तदुत्तरत्व-

बाधापत्तिः, एवमन्यत्रापि । अन्यस्य सपिण्डीकरणस्यापकर्षे तत्पूर्वाणां मासिकानामपकर्षः । ननु क्लृप्तबाधापत्तिमूलकोऽयं न्यायः । न च प्रकृते किमपि तत्कल्पकमस्तीति चेन्न ?

सपिण्डीकरणान्ता तु ज्ञेया प्रेतक्रिया बुधैः

इत्यादि वचनस्यैव क्रमकल्पकत्वात् । किञ्च प्रयोगविध्यैक्यमपि क्रमकल्पकम् । न च प्रयोगविध्यैक्याभावः प्रकृते प्रेतत्वविमुक्तिरूपप्रयोजनैक्यात् तदैक्यादधिमासपातस्थले अवश्यमपकर्षस्य स्वीकरणत्वादित्यलम् प्रकृतावेशेन ।

[क्रमविरोधनिरूपणम्]

अथ क्रमयोर्विरोधः । काम्यैन्द्राग्न्यद्वयोः सन्निधाविज्याद्वयमाम्नातमस्ति, तत्रानियमेसन द्वयोरपि द्वयोरङ्गत्वे प्रसक्ते यथाक्रमपाठादाद्यस्याद्याङ्गत्वं, द्वितीयस्य द्वितीयाङ्गत्वम् ।

[क्रमसाध्यविरोधनिरूपणम्]

क्रमसाध्ययोर्विरोधः पौरौडासिकं काण्डमाम्नातमस्ति । तत्र पौरौडाशिकमिति समाख्यास्ति तत्काण्डवर्तिकर्मादीनां तत्काण्डावान्तरप्रकरणे तत्काण्डे सान्नाय्येष्टि सन्निधाने शुन्धध्वमिति मन्त्रस्याम्नातमस्ति । तत्र मन्त्रस्य समाख्यया पुरोडाशाङ्गत्वं प्रसक्तं, सन्निधानपाठाद्बाधयित्वा सान्नाय्याङ्गत्वं प्रतिपाद्यते । न च महाप्रकरणेन सन्निधिबाधः, तस्य मन्त्रस्य वाचनिकाङ्गमध्यपातित्वेन बलवत्त्वात् । नचैवं तस्य प्रकरणविषयत्वापत्तिः, मन्त्रस्य सिद्धरूपत्वेन लिङ्गविनियोज्यत्वेन प्रकरणविषयत्वाभावात् । सन्निधानस्यापि समाख्यावदपूर्वसाधनत्वलक्षणतात्पर्यग्राहकत्व एव बलाबलं, न तु विनियोगे ।

अयं भावः, श्रुतिलिङ्गवाक्यानां विनियोगे बलाबलत्वमितरेषां लक्षणातात्पर्यग्राहकत्वेन बलाबलमिति मीमांसासिद्धन्तः ।

[समाख्याविरोधनिरूपणम्]

एवं समाख्ययोर्विरोध उदाह्रियते आध्वर्यव इति सामान्याया याजमानमिति विशेषसमाख्यया बाधः । एवं द्व्यन्तरितत्र्यन्तरितस्थले विरोधो बोध्यः । स चायं श्रुत्या-

दिना लिङ्गादिबाधो अप्राप्तबाधः। अप्राप्तबाधकत्वञ्चाङ्गताबोधकलिङ्गादि कल्प्य-प्रमाणप्रतिबन्धकत्वम्। तथा चैन्द्र्या गार्हपत्यमित्यादिश्रुतेरिन्द्रवाचकत्वरूपलिङ्गादि कल्प्यं, यदनेन मन्त्रेण इन्द्रः प्रकाश्य इतीन्द्राङ्गताग्राहकश्रुत्यादि, तत्प्रतिबन्धकत्वं गार्हपत्याङ्गताबोधनद्वारा अस्त्येवेति बलवता पूर्वपूर्वप्रमाणेन हि अङ्गत्वे अवधारिते निराकांक्षत्वादुत्तरोत्तरतः पूर्वपूर्वप्रमाणकल्पनैव नोदेतीति सोऽयमप्राप्तबाधः। एवं गृहमेधीये आज्यभागौ यजतीत्यादावपि सामान्यविशेषभावे नित्यनैमित्तिकभावे च प्राप्तबाधः। प्राप्तबाधकत्वञ्च क्लृप्तस्य बोधकस्य विशेषविषयताप्रतिबन्धकत्वं सामान्यशास्त्रादेर्हि विशेषशास्त्रादिना पदहोमविषयतामात्रं प्रतिबध्यते न तु सामान्यशास्त्रमपि, तस्य क्लृप्तत्वेनाकल्पनीयत्वादत एव येन सामान्यशास्त्रमेव पूर्वमालोचितं, तस्य विशेषादर्शन-जनित भ्रम एव विशेषविषयताको जायते।

अत्रायमाशयः। आहवनीये जुहोतीति सामान्यशास्त्रं, पदे जुहोतीति विशेषशास्त्रमित्येव सामान्यविशेषभावः। तत्र सामान्यशास्त्रप्राप्तस्य होमत्वावच्छेदेनाहवनीयविषयत्वस्य बोधने पदहोमेऽपि तादृशविषयत्वस्य बोधनात् विशेषशास्त्रेण तत्प्रतिबन्धादिति दिक्। एवं यत्र तौ पशौ करोतीत्यादौ शास्त्रप्राप्तस्य निषेधः तत्राविधिप्रापकशास्त्रस्य निषेधसापेक्षत्वेनोपजीव्यत्वात् अत्यन्तबाधानुपपत्तेरत्यन्त-बाधस्य प्राप्त्यपूर्वकत्वात् विशेषविषयत्वमावश्यकं, तथापि तत्र विकल्पाङ्गीकारात्। यदि विकल्पः प्रयोगभेदमादाय भवति, न तु क्रियाभेदं तदा विशेषविषयत्वप्रतिबन्धान्नोक्त-लक्षणाव्याप्तिः। यथा च तत रागप्राप्तनिषेधवत् भ्रान्तिप्राप्तस्य बाधमङ्गीकृत्य न विकल्पः, तथाग्रे वक्ष्यते।

**महामहोपाध्यायइन्द्रपतिना कृतं**
**मीमांसारसपल्वलं समाप्तम्।**
**शाके १६६७ मार्गशुल्कपञ्चदश्यां रवौ॥**

———

## REVIEWS

*Śrāvakabhūmi of Ārya Asaṅga, ed. by Dr. Karunesh Shukla, published by Kashi Prasad Jayaswal Research Institute, Patna, 1973, pp. 511, price Rs. 45/– (cloth-bound edition).*

The present work is the 13th *bhūmi* or section of the *Yogācārabhūmi śāstra* which consists of seventeen *bhūmis* or sections. The personality of Asaṅga and his work, *Yogācārabhūmi śāstra* are of an epoch-making significance in the history of Buddhist Philosophy inasmuch as they made an improvement on the philosophy of Mādhyamika philosophers, particularly, Nāgārjuna and created a new school of philosophy called Yogācāra Idealism. The full text of the *Yogācārabhūmi śāstra*, however, is not available in Sanskrit to this date. It is, however, being published in several instalments. First of all, only the *Bodhisattvabhūmi*, the 15th *bhūmi*, was publised by U. Wogihara from Tokyo in 1930. But this text was incomplete. Then in 1938 Mahapandit Rahul Sankrityayana brought the manuscript ef the *Yogācārabhūmi śāstra* from Tibet and gave it to the Kashi Prasad Jayaswal Research Institute, Patna. Prof. V. Bhattacharya edited the five *bhūmis* and the Univesrity of Calcutta published them in one volume under the title "*Yogācārabhūmi*" in 1957. Then Dr. N. Dutta edited the complete *Bodhisattvabhūmi* and the K. P. Jayaswal Research Institute published it in 1966. Now the same institute has published the work under review for the first time. This is the whole story of the available sections of the *Yogācārabhūmi śāstra*, in Sanskrit. Needless

to say, the whole work which was originally written in Sanskrit, is available in Chinese, Tibetan and Japanese translations. It is informed by Dr. Karunesh Shukla that Prof, Anant Lal Thakur has edited the remaining *Bhūmis* (p. XLIV, footnote 3). But they are not yet published. Anyway, the publication of the '*Śrāvakabhūmi* Is welcomed whole heartedly.

The editor has taken great pains to decipher the manuscript and make it intelligible. But since he has edited from a single manuscript or rather from the photographic copy of a single manuscript, he has relied more upon the intelligibility of the context than upon the objective selection of the correct readieg out of all the variants. But he has thoroughly understood his text and has profitably used Alex Wayman's *Analysis of the Śrāvaka Bhūmi Manuscript* which was published from Los Angeles in 1961. He has also added an Introduction to his edition. It deals, among others, with the sources and the script of the *Śrāvakabhūmi* and the life and works of Asaṅga. According to him, the script of the present manuscript is North Indian Nagari Script from which the present Devanagari Script, Bengali Script and other North Indian Scripts have developed. Further, he thinks that the date of Asaṅga is between 350-415 A. D. But as some parts of the *Yogācārabhūmi śāstra* were translated by Dharmarakṣa in Chinese between 414-421 A. D., the date of Asaṅga can be pushed back atleast by 50 years. The learned editor has not examined the view of those who contend that Dharmarakṣa did the above translation during the life.time of Asaṅga.

Further, it is really discouraging to note that the

four appendices and three indices which the learned editor has written could not be published alongwith the present work. They were very useful and now they should be published separately as early as possible, for, they will facilitate the philosophical studies of the work.

But even in its present form the book throws much light on Yogācāra ethics, theory of knowledge and spiritual discipline. It consists of three Books which are called Yogasthānas. The first Yogasthāna has three chapters, Gotra Bhūmi, Avatara Bhūmi and Naiṣkramya Bhūmi. The second and third Yogasthānas have no Chapters. At the end of each Chapter and Yogasthāna, its summary is given in verse. The whole work is otherwise, written in simple Sanskrit prose. The sentences are short and the technical terms are well defined. A simple perusal of the book testifies why both in clarity of thought and lucidity of communication the present work of Asaṅga was really a classic worthy of emulation by his successors in India, China, Japan and Tibet. Both the method and the tenet of Idealist philosophy are clearly discussed. The four-fold classification of argument into Apekṣāyukti, kārya-kāraṇayukti, upapattisādhana yukti and Dharmatāyukti ( pp. 141 ff ) is probably the greatest contribution of Asaṅga to the theory of knowledge. No modern Buddhist scholar has fully utilized this classification of argument in the exposition of Buddhist theory of knowledge. The doctrine of two fold apekṣāyukti, viz. utpatti apekṣā and Prajñapti-apekṣā is impregnated with great philosophical significance. Further, it is important to note that Asaṅga

distinguished between Pramāṇa or Anumāna and Yukti or Philosophical argument and that he accepted verbal testimony, perception and inference as pramāṇas (p. 142). So the current view that Buddhists accept only two pramāṇas, perception and inference, is wrong and must be revised. In this way the publication of the *Śrāvaka-bhūmi* necessitates a reappraisal of Buddhist idealism. Herein lies the importance of the present publicatin for which the learned editor is to be Congratulated. The presnt reviewer invites scholars to translate the available sections of the *Yogācārabhūmi śāstra* in Hindi and English and research the philosophy of Asaṅga on its basis. This *magnum opus* of Indian Buddhism must be accorded the place in modern Indian languages that it deserves or has in Chinese, Japanese and Tibetan. It is a classic of Mahayana Buddhism. The present volume is nicely printed although it has many printing mistakes which should be corrected by publishing an 'Errata' alongwith the forthcoming publication of its appendices and indices.

S. L. Pandey
University of Allahabad
Allahabad

The *Bodhisattvacarita*, a *mahākāvya* in Sanskrit, by Dr. Satya Vrat Shastri. Second edition with Hindi translation and notes by the author. Meharchand Lachhmandas, Daryaganj, Delhi, 1973. pp. 238. Rs. 16.00.

The book, which was first published in 1960 and has now appeared in revised and enlarged form, is a *mahākāvya* in Sanskrit, written by one of the gifted poets of Sanskrit today. The poet, Dr. Satya Vrat Shastri, has, through this poem as also his *Gurugovindasiṁhacarita* (Patiala, 1967), carved out for himself a place of honour in the galaxy of the creative writers in Sanskrit.

The poem under review deals with the story of the noble deeds (*avadānas*) of the Bodhisattva, the Buddha in his former births wherein he was on his way to the attainment of perfect knowledge. The epic re-tells some of the fine *avadānas* of the Buddhist literature in ornate *kāvya* style, and it is both in the matter and the manner of presenting it that the poem is superb and deserves high praise.

A *mahākāvya*, according to the theorists, is a poetic composition in verse, divided into cantos and devoted to portrayal of the life of its hero in i s full detail or of a host of them belonging to one dynastic line. The present *kāvya* makes a departure from this conventional concept inasmuch as it deals with different characters with no chronological continuity in the events narrated in different cantos. The characters depicted, however, have

been conceived as manifestations of one single spirit—that of the Bodhisattva—in his different lives, and this has given an element of unity to the otherwise diverse narratives not storiologically linked with one another.

This *kāvya*, in its fourteen cantos, sings the life of the Bodhisattva in his nine forms. Of these, four relate to his life as a king and two as a merchant, while in others he appears as a monk, a farmer, and a teacher. The Bodhisattva illustrates through these forms the ethical virtues for which Buddhism stood. These values have been set forth both through the example of the noble deeds of the Bodhisattva and by precept—the preaching by the noble soul.

Evidently, the plot of the poem, as we have it, is not centred round one figure, but it treats of a number of characters of different names and forms. The unifying factor in it is the spirit of the Bodhisattva which permeates the different figures. This feature of the plot is both the strength and the weakness of the poem, for while it lends dignity to the theme and gives it the dimension of a *mahākāvya*, it takes away from it the veriety and the interest in the narrative and also tends to narrow the scope for characterisation and for delineation of sentiments. Despite these handicaps inherent in such a plot, the *kāvya* possesses fine instances of vivid characterisation and an effective realisation of sentiments.

One of the chief merits of the poem consists in its descriptive and narrative art. We come across in the poem some beautiful tales with events in swift movement and a number of dainty scenes from nature depicted

with vividness and imagination. The poem interests itself more in a moving scene than in its still form, and has always a preference for a vast landscape. The *kāvya* portrays the various nature scenes in broad outline and not in minute detail, and yet the sketches are effective and vigorous.

The poem has some fine instances of the portrayal of human beauty as well. The painting has been done in sober colours and with a few straight lines here and there. The figures portrayed are elegant and expressive, and there is a dominant element of suggestion in them.

The *kāvya*, dealing as it does with the theme of the sublime in human character, has an essentially edifying tone throughout. It embodies at places fine verses of gnomic value, and these are forceful in appeal. At some places there are long sermons, but they are not devoid of interest. However, the poem is more effective in places where it is less prolix, and is succinct in its observations on things universal and things ethical.

The poem presents instances of fine imagery which forms a part of its poetic ornamentation. The imagery takes its strength in the poem from the standards of similitude, which are at places quite fresh. But what strikes us most in the poem is its diction which is the essence of the poet's ornate style. This diction is even and smooth generally, rugged and uncouth rarely, and embellished and attractive always. The poet's ideas are

couched in felicitous expression, and the felicity and ease in the diction spring from the music of words which have been set and re-set with meticulous care and fine judgement. The poet has a sensitive ear for the melody of sounds which have been rounded and formed into phrases and sentences of musical appeal. We have in his *kāvya* some fine instances of felicity of diction, and they take us perforce to the poesy of Kalidasa and Deṇḍin. An irresistible love for well-fashioned phreseology has prompted the poet to set his ornate diction with gems of rare beauty drawn from the poetry of great classicists of Sanskrit. We have happy reminiscences, in his diction, of the poetry of the Upaniṣads, of the two Epics, and of Kalidāsa, Bhāravi, Daṇḍin and Bhavabhūti.

One aspect of the language of the poem deserves special mention, and it appertains to its display of grammatical subtleties which both brightens it and lends it pedantic dignity. A grammarian by genius and cultivation, the poet loves the science of the language as much as he does the language itself, and he cannot possibly keep the one away from the other. At times his love for grammar tends to irritate us, but happily it is seldom carried to its excess.

The poem on the whole is an excellent attempt at singing an old saga of Indian culture in a medium as old as Pāṇini and yet quite fresh. It gives a forceful expression to the high ideals and virtues of the Indian culture in general and the Buddhism in particular,

The poet deserves our hearty congratulations on bringing out, in its second edition, this fine piece of his creative writing, which forms a valued contribution to the understanding of our cultural heritage. and is a welcome addition to the rich treasure of the classical Sanskrit poetry.

Dharmendra Kumar Gupta.
M. A., M. O. L. ,Ph. D.,
Head, Department of Sanskrit,
Punjabi University, Patiala.

## Journal of the Ganganatha Jha Kendriya Sanskrit Vidyapeetha, Allahabad.
## Guide Lines

The journal of the **Ganganatha Jha Kendriya Sanskrit Vidyapeetha** is a quarterly research journal of Indology. Articles on indological subjects for publication in the journal will be received by the Secretary or by any member of the Editorial Board. All such articles will be placed before the Chairman for referring each of them to an expert for opinion as to whether it is fit to be published in the **journal**. The opinion of the expert will be final. In case of rejection, the article will be returned to the author if asked for.

Articles for publication in the **journal** may be written in English, Sanskrit or Hindi and must give an evidence of research by discovery of new relationship of known facts. The manuscripts should be typed on one side of paper in double space, leaving sufficient margin on the left side. Foot notes should be numbered consecutively. All the titles of books and journals as well as important Sanskrit or non-English words and Sanskrit or non-English quotations (if written in Roman script) should be underlined and properly given diacritical marks given below. Only popular proper names and common Sanskrit words should be left unmarked. Titles and places of publication or edition of books and journals when referred to for the first time, in a paper, should be given in full, thereafter, their abbreviations should be

used. The paper should be completely ready for the press.

Each contributor is given 25 offprints of his paper, free of cost, besides a copy of the issue of the journal containing the paper. Extra copies of offprints may be supplied at cost, if requested at the time of sending the paper. The author must give his full postal address in the paper.

**Reviews**

Books received for review in the journal will be referred to the Chairman of the Editorial Board to decide whether the book should be reviewed in the journal or not. Ordinarily, two copies of the books will be required to be submitted for review in the **journal.** Chairman will appoint a scholar to review a book and the copy of the book will be deemed to be presented to the reviewer. The name of the reviewer will appear at the end of the review.

**System of Transliteration into Roman**

| | | | | | |
|---|---|---|---|---|---|
| अ | a | ऐ | ai | ङ | ṅ |
| आ | ā | ओ | o | च् | c |
| इ | i | औ | au | छ् | ch |
| ई | ī | अनुस्वार | ṁ | ज् | j |
| उ | u | विसर्ग | ḥ | झ् | jh |
| ऊ | ū | क | k | ञ् | ñ |
| ऋ | ṛ | ख् | kh | ट् | ṭ |
| ॠ | ṛ | ग् | g | ठ् | ṭh |
| ए | e | घ् | gh | ड् | ḍ |

| | | | | | |
|---|---|---|---|---|---|
| ढ् | ḍh | फ् | ph | श् | ś |
| ण् | ṇ | ब् | b | ष् | ṣ |
| त | t | भ् | bh | स् | s |
| थ् | th | म् | m | ह् | h |
| द् | d | य् | y | क्ष् | kṣ |
| ध् | dh | र् | r | त्र् | tr |
| न् | n | ल् | l | ज्ञ् | jñ |
| प् | p | व् | v | | |

## Publications of the Ganganatha Jha Kendriya Sanskrit Vidyapeetha Moti Lal Nehru Park, Allahabad—2.

### I Journals*

1—Quarterly Journal of the G. N. Jha K. S. Vidyapeetha Vol. I to XXIX 50.00

**Special Volumes**

( i ) Umesh Mishra Comm. Volume, Journal Vol. XXIV, XXV and XXVI (1—3).

Full Bound Inside India 115.00

Outside India 175.00

( ii ) Pt. K. C. Chattopadhyaya Felicitation Volume Journal Vol. XXVII (3—4)—XXVIII (1—2).

Full Bound 55.00

( iii ) G. N. Jha Centenary Volume (Journal Vol. XXIX) Full Bound 25.00

( iv ) Autobiographical Notes of Mm. Dr. Sir G. N. Jha ( Journal Vol. XXX ) 25.00

( v ) Dr. A. N. Jha Commemoration Volume (Journal Vol. XXXI)

( vi ) Mm. Dr. Gopinath Kaviraj Commemoration Volume ( Journal Vol. XXXII )

( vii ) Journal of the G. N. Jha K. S. Vidyapeetha Vol. XXXIII (Rs. 10.00 each) 40.00

---

*The subscription charges of Journal have been **raised** from Rs. 25/- to Rs 40/- Annually (Rs 10/-Quarterly) for **Volume XXXIII onwards**. The back numbers will be available at double the rate of current number.

## II Books

| | |
|---|---|
| 1—Annual Bibliography of Indology, 1969 | 30.00 |
| 2—Annual Bibliography of Indology 1970-71 | |
| 3—Descriptive Catalogue of Sanskrit Mss. | |
| ( i ) Vol. I Pt. I | 25.00 |
| ( ii ) Vol. I Pt. II | 35.00 |
| (iii ) Vol. II Pt. I | 35.00 |
| (iv ) Vol. II Pt. II | 45.00 |
| ( v ) Vol. III | 45.00 |
| 4—Sanskrit Documents in the National Archives of India Edited by S.N. Sen & Mm. Umesh Mishra | 15.00 |
| 5—Modern Assamese Literature by Dr. Neog | 6.00 |
| 6—Janaraja Champu by Kṛṣṇadatta | 14.00 |
| 7—Lakṣmīguṇamaṇimālā by Kṛṣṇadatta. | 14.00 |
| 8—Bapu (in Sanskrit) Edited by Dr. B.R. Saxena | 10.00 |
| 9—Kāvyaprakāśa with three unpublished commentaries-Bālacittānuranjanī, Sārabodhinī and Darpaṇa. | 60.00 |
| 10—Mimamsa Jurisprudence : The Source of Hindu Law by Sri A.S. Nataraja Aiyer | 4.00 |
| 11—Manusmṛti with Manubhāṣya of Medhātithi, Edited by Mm. G.N. Jha. | 125.00 |
| 12—Prātimokṣasūtra of Mahāsamghikas Edited by Dr. W. Pachowa and Ramakant Mishra. | 5.00 |
| 13—Mahākālasaṁhitā (Kāmakalākhaṇḍa) | 30.00 |
| 14—Mahākālasaṁhitā (Guhyakālīkhaṇḍa Pt. I) | |
| 15—Mahākālasaṁhitā (Guhyakālīkhaṇḍa, Pt. II). | |
| 16—Mahākālasaṁhitā (Guhyakālī Khaṇḍa, Pt. III). | |
| 17—Vṛtti Vārtika of Appaya Dīkṣit, Critical Edition. | |
| 18—Mīmāmsārasapalvalam : Critical Edition | |
| 19—Indological Studies by Dr. B.C. Law. | 21.00 |

20—Descriptive Catalogue of the Vidyapeetha Publications

21—Jātakamālā-eka Adhyayana.

## OUR FORTHCOMING PUBLICATIONS

1. Descriptive Catalogue of Sanskrit Mss., Vol.IV
2. The System of Kṛt Accentuation in Pāṇini and the Veda
3. Gautamīya Sūtra Prakāśa
4. Nyāyatātparya Dīpikā
5. Anvīkṣānayatattvabodha
6. Pāraskara Gṛhya Sūtra : Critical Edition with best available commentaries.
7. Manusmṛti with Medhātithi Bhāṣya, Textual Notes, Explanatary Notes, Comparative Notes and English Translation of Text and Medhātithi Bhāṣya by Dr. G. N. Jha in 14 Volumes.
8. Tilakamanjarī : Critical Edition with Hindi Translation and Notes.
9. Śāktapramoda : Critical Edition with Hindi Introduction, index and appendix.
10. Nyāyadarśana : Hindi Translation of Bangala Text, by Mm. Phanibhushana Tarkavageesh.
11. Chakra Kaumudī of Badrinath : Critical Edition and simple Hindi Translation.
12. Ganeśa Pariṇaya : Critical Edition.
13. Haravijaya Mahākāvya of Ratnākara, Critical Edition and Translation.
14. Vaiśeṣika Sūtra with Chandrakānta Bhāṣya : Critical Edition and Translation.
15. Ekāvalī of Vidyādhara : Vyākhyā and Critical Edition
16. Bṛhatkathāśloka Saṁgraha of Budha Swami, Critical Edition.

17. Tripurāsāra Samuccaya with three unpublished commentaries : Critical Edition.
18. Hindu Law In Its Sources by Dr. G. N. Jha : Vol. I and II. Second Edition by G. N. Jha Vidyapeetha.
19. Annual Bibliography of Indology 1972—77
20. Siddhāntalakṣaṇa Tattvāloka Vyākhyā.
21. Vaiśeṣika Vṛtti : Sugamā.
22. Linguistic Study of Yogavāsiṣṭha by Dr. Satyavrata.
23. Indological Study in America after 1947 by Dr. S. M. Katre.
24. Vidyapeetha Calender

TERMS OF SALE

1. Books are despatched against advance payments only.
2. Payments are accepted by money order or bank draft drawn at Allahabad branch of any bank.
3. Bank commission will be charged extra if the payment is made by cheque.
4. Postage and Packing charges will be extra. The current volumes alone of our Research Journal will, however, be despatched free of postage and packing charges.
5. The rates of trade discount on our publications are as under :—

   (i) Teachers 10% (ii) Libraries : On text studies 15% Journal 25% Other publications 20% (iii) Book Sellers 40%